२५ उपमानादाचारे । पा०३।१।१०।

२६ आधारात् । पा०३।१।१०+वा०१।

२७ कर्तुर्विप् । पा०३।१।११,भा०[1]।

२८ गल्भ-क्लीव-होडेभ्यो ङित् । पा०३।१।११+वा०३।

२९ क्यङ । पा०३।१।११।

३० च्व्यर्थे भृशादिभ्यः स्तलोपश्च । पा०३।१।१२।

३१ डाच् लोहितादिभ्यः क्यष् । पा०।३।१।१३।

३२ कष्ट-कक्ष-सत्र-गहनाय पापे क्रमणे । पा०३।१।१४+वा०१।

३३ रोमन्थं वर्तयति हनुचाले । पा०३।१।१५+भा०।

३४ वाष्प-उष्म-फेनमुद्वमति । पा०३।१।१६+भा०।

३५ सुखादीनि वेदयते । पा०३।१।१८।

३६ शब्दादीन् करोति । पा०३।१।१७।

३७ नमस्-तपस्-वरिवसः क्यच् । पा०३।१।१९,१५+वा०१।

३८ चित्रङः आश्चर्ये । पा०३।१।१९+वा०३+भा०।

३९ कण्ड्वादिभ्यो यक् । पा०३।१।२७।

४० एकाचो हलादेः क्रियार्थाद् भृशाभीक्ष्ण्ये यङ । पा०३।१।२२।

४१ ऋ-सूत्रि-मूत्रि-सूचि-अट-अश-ऊर्णुभ्यः । पा०३।१।२२, भा० ।

४२ गत्यर्थात् कौटिल्य एव । पा०३।१।२३।

४३ लुप-सद-चर-गृ-जप-जभ-दह-दशो गर्ह्यात् । पा०३।१।२४।

४४ न शुभ-रुचः । पा०३।१।२२, भा०।

४५ चुरादिभ्यो णिच् । पा०३।१।२५।

४६ प्रयोजकव्यापारे । पा०३।१।२६। पा०१।४।५५।

४७ गुपू-धूप-विछ-पण-पनः आयो वा । पा०३।१।२८,३१।

४८ ऋत ईयङ । पा०३।१।२९।

४९ कमो णिङ । पा०३।१।३०।

५० शिति आयादयः । पा०३।१।३१।

५१ अनेकाचो लिटः आम् कृ-भू-अस्तिलिट् चानु । पा०३।१।३५+भा०।पा०३।१।४०+वा०३,८,९।

५२ इजादेर्गुरुमतोऽनृछ-ऊर्णोः । पा०३।१।३६+वा०६।

५३ कास्-अय-दय-आसः । पा०३।१।३५,३७।

५४ जागृ-उषो वा । पा०३।१।३८।

५५ भी-ह्री-हूनां द्वे च । पा०३।१।३९।

५६ विभराम् । पा०३।१।३९।

५७ विदाम् । पा०३।१।३८+वा०१।

५८ लोटः कृलोट् । पा०३।१।४१।

५९ स्य-तासौ लृ-लुटोः । पा०३।१।३३।

६० लुङि सिच् । पा०३।२।४३,४४।

६१ स्पृश-मृश-कृष-तृप-दृपो वा । पा०३।१।४४।वा०७।

६२ दा-धा-गाति-स्था-भू-पोऽतङि लुक् । पा०२।४।७७।

६३ घ्रा-धे-शा-च्छा-सो वा । पा०२।४।७८।

६४ तनादिभ्यः त-थासोः । पा०२।४।७९।

६५ शलः इगुपान्तात् अदृशोऽनिटः क्सः । पा०३।१।४५,४७।

६६ श्लिषः । पा०३।१।४६।

---

१ भा० इति व्याकरणमहाभाष्यं पतञ्जलिप्रणीतम् ।

६७ सत्त्वाश्लेषे । पा०३।१।४६+वा०४।

६८ णि-श्रि-द्रु-स्रु-कमः कर्तरि चङ् । पा०३।१।४८+वा०१।

६९ धे-श्वेर्वा । पा०३।१।४९।

७० ऋ-सृ-शास्-असु-ख्या-वचः अङ् । पा०३।१।५२,५६।

७१ ह्वा-लिप्-सिचः । पा०३।१।५३।

७२ तङि वा । पा०३।१।५४।

७३ लृदिद्-द्युतादि-पुष्यत्यादिभ्योऽतङि । पा०३।१।५५। तथा काशिका ।

७४ इरितो वा । पा०३।१।५७।

७५ जॄ-श्वि-स्तम्भु-म्रुचु-म्लुचु-ग्लुचः । पा०३।१।५८।

७६ चिण् ते पदः । पा०३।१।६०।

७७ दीप-जन-बुध-पूरि-तायि-प्यायो वा । पा०३।१।६१।

७८ भाव-आप्ययोः । पा०३।१।६६।

७९ न अनोस्तपः । पा०३।१।६५।

८० तिङ्शिति यक् अलिङाशीर्लिङि । पा०३।१।६७। पा०३।४। ११३,११५,११६।

८१ तपः तपआप्यात् । पा०३।१।८८।

८२ कर्तरि शप् । पा०३।१।६८।

८३ अदादिभ्यो लुक् । पा०२।४।७२। पा०२।४।५८।

८४ हूनां द्वे च । पा०२।४।७५। पा०६।१।१०।

८५ चिणः । पा०६।४।१०४।

८६ यङो बहुलम् । पा०२।४।७४।

८७ दिवादिभ्यः श्यन् । पा०३।१।६९।

८८ भ्राश-म्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषो वा । पा०३।१।७०।

८९ यसः । पा०३।१।७१।

९० समः । पा०३।१।७२।

९१ कुषि-रजः आप्ये । पा०३।१।९०।

९२ तुदादिभ्यः शः । पा०३।१।७७।

९३ रुधादीनां श्नम् । पा०३।१।७८।

९४ तनादिभ्यः उः । पा०३।१।७९।

९५ स्वादिभ्यः श्नुः । पा०३।१।७३।

९६ श्रु-कृव्-धिवां शृ-कृ-धि च । पा०३।१।७४,८०।

९७ अक्षो वा । पा०३।१।७५।

९८ तनूकृतौ तक्षः । पा०३।१।७६।

९९ स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भु-स्कुभ्यः । पा०३।१।८२।

१०० श्नाः । पा०३।१।८२।

१०१ क्र्यादिभ्यः । पा०३।१।८१।

१०२ हलो हौ शानच् । पा०३।१।८३।

१०३ बहुलम् । पा०३।३।११३।

१०४ भाव-आप्ययोः । पा०३।४।७०।

१०५ तव्य-अनीयर्-केलिमरः । पा०३।१।९६।+वा०१।

१०६ वास्तव्यः ।पा०३।१।९६वा०२।

१०७ यत् । पा०३।१।९७।

१०८ पु-शकि-तकि-चति-यति-शसि-सहि-यजः । पा०३।१।९८,९९,९७भा०।

१०९ गद-मद-यमोऽप्रादेः । पा०३।१।१००।

११० चरः । पा०३।१।१००।

१११ अगुरौ आङः । पा०३।१।१००वा०१।

११२ अवद्य-पण्य-वर्याः गर्ह्य-विक्रेय-अनिरोधेषु । पा०३।१।१०१।

११३ वह्यं करणम् । पा०३।१।१०२।

११४ अर्यः स्वामि-वैश्ययोः । पा०३।१।१०३।

११५ ऋतुमती उपसर्या । पा०३।१।१०४।

११६ अजर्यं संगतम् । पा०३।१।१०५।

११७ वदः सुपः क्यप् च। पा०३।१।१०६।
११८ भुवः। पा०३।१।१०७।
११९ भावे हनस्त च। पा०३।१।१०८,१०७।
१२० इण्-स्तु-शासु-वृञ्-दृ-जुषः। पा०३।१।१०९+वा०१।
१२१ ऋदुपान्ताद् अक्लृपि-चृतः। पा०३।१।११०।
१२२ खेयम्। पा०३।१।१११।
१२३ भृञः असंज्ञायाम्। पा०३।१।११२।
१२४ समो वा। पा०३।१।११२वा०४।
१२५ कृ-वृषि-मृजि-शंसि-दुहि-गुहः। पा०३।१।१२०,११३। तथा काशिका ३।१।१०९।
१२६ राजसूय-रुच्य-कृष्टपच्य-अव्यथ्याः पा०३।१।११४।
१२७ कुप्य-आज्य-भिद्य-उद्ध्य-सिध्य-युग्यानि नाम्नि। पा०३।१।११४,१०९। वा०२। पा०३।१।११५,११६,१२१।
१२८ जित्या-विपूय-विनीया हलि-मुञ्ज-कल्केषु। पा०३।१।११७।
१२९ पद-अस्वैरि-पक्ष्य-बाह्यासु ग्रहः। पा०३।१।११९।
१३० ऋद्-हलो ण्यत्। पा०३।१।१२४।
१३१ पाणि-समवाभ्यां सृजः। पा०३।१।१२४वा०१,२।
१३२ ओःआवश्यके। पा०३।१।१२५।
१३३ आसु-यु-वपि-रपि-लपि-त्रपि-चमि-दभः। पा०३।१।१२६,१२४वा०३।
१३४ अमावसो वा। पा०३।१।१२२।
१३५ प्रणाय्योऽसंमते। पा०३।१।१२८।
१३६ धाय्या-पाय्य-आनाय्य-सांनाय्य-निकाय्या नाम्नि। पा०३।१।१२९,१२७।
१३७ क्रतौ कुण्डपाय्य-संचाय्यौ। पा०३।१।१३०।
१३८ अग्नौ चित्या-उपचाय्य-परिचाय्याः। पा०३।१।१३१,१३२।
१३९ कर्तरि ण्वुल्-तृच्-अचः। पा०३।१।१३३,१३४वा०१। पा०३।४।६७।
१४० नन्दि-ग्रहादिभ्यो ल्यु-णिनी। पा०३।१।१३४।
१४१ ज्ञा-कॄ-प्री-इगुपान्तात् कः। पा०३।१।१३५।
१४२ आतः प्रादिभ्यः। पा०३।१।१३६।
१४३ पा-घ्रा-ध्मा-धेट्-दृशः शः। पा०३।१।१३७।
१४४ धारि-पारि-वेदि-उदेजि-चेति-साति-साहि-विन्दः अप्रादेः। पा०३।१।१३८+वा०२+भा०।
१४५ लिपो नेश्च। पा०३।१।१३८+वा०१।
१४६ ज्वलादिभ्यो णो वा। पा०३।१।१४०,१३९।
१४७ श्या-आत्-इण्-व्यध-स्रुस-तनः। पा०३।१।१४१,१४०वा०१।
१४८ आ-समः स्नोः। पा०३।१।१४१।
१४९ हृ-सः अवात्। पा०३।१।१४१।
१५० दु-न्यः अप्रादेः। पा०३।१।१४२।
१५१ भुवो वा। [1]काशिका३।१।१४३।
१५२ ग्रहः। पा०३।१।१४३।

---

१ अत्र काशिकायाम् अस्मिन् सूत्रे "भवतेश्च इति वक्तव्यम्" इत्येवं निर्दिश्य भुवः ग्रहणम्।

१५३ गेहे कः । पा०३।१।१४४।

१५४ गः थकन् । पा०३।१।१४६।

१५५ ण्युट् । ३।१।१४७।

१५६ हः व्रीहि-कालयोः। पा०३।१।१४८।

१५७ नृति-खनि-रजः शिल्पिनि ष्वुन् । पा०३।१।१४५+भा०।

१५८ प्रु-सृ-ल्वः वुन् । पा०३।१।१४९।

१५९ आशिषि । पा०३।१।१५०।

[ प्रथमस्य अध्यायस्य प्रथमः पादः समाप्तः ]

## [ द्वितीयः पादः ]

१ व्याप्याद् अण् । पा०३।२।१।

२ आतः अप्रादेः कः । पा०३।२।३।

३ सुपः । पा०३।२।४+वा०२+भा०।

४ चरेः टः । पा०३।२।१६।

५ पुरस्-अग्रतस्-अग्रेभ्यः सर्तेः । पा०३।२।१८।

६ पूर्वात् कर्तुः । पा०३।२।१९।

७ कृञः हेतु-शील-अनुलोमेषु । पा०३।२।२०।

८ स्तम्ब-शकृद्भ्यां व्रीहि-वत्सयोः इन् । पा०३।२।२४+वा०१।

९ हृञः दृति-नाथात् पशौ । पा०३।२।२५।

१० फलेग्रहिः आत्मंभरिः कुक्षिंभरिः । पा०३।२।२६+वा०१।

११ एजेः खश् । पा०३।२।२८।

१२ शुनी-स्तनात् धेटः । पा०३।२।२८। वा०१। पा०३।२।२९।

१३ नासिका-नाडी-मुष्टि-घटी-खरीभ्यः । पा०३।२।२९,३०,२९भा०।

१४ ध्मः पाण्यादिभ्यश्च । पा०३।२।२९,३०,३७।

१५ कूलाद् उदो रुजि-वहः । पा०३।२।३१।

१६ वह-अभ्राद् लिहः । पा०३।२।३२।

१७ परिमाणात् पचः । पा०३।२।३३।

१८ मित-नखात् । पा०३।२।३४।

१९ विधु-अरुस्-तिलात् तुदः । पा०३।२।३५।पा०३।२।२८वा०१।

२० वातमज-शर्धंजह-इरंमद-परंतप-द्विषंतप-भगंदर-पुरंदराः । पा०३।२।२८वा०१।पा०३।२।३७,३९,४१। काशिका ३।२।४१।

२१ उग्र-असूर्याद् दृशः । पा०३।२।३७,३६।

२२ ललाटात् तपः । पा०३।२।३६।

२३ प्रिय-वशाद् वदः । पा०३।२।३८।

२४ वाचंयमो व्रते । पा०३।२।४०।

२५ सर्वात् सहः । पा३।२।४१।

२६ कूल-अभ्र-करीषाच्च कषः । पा०३।२।४२।

२७ मेघ-ऋति-भयात् कृञः खः । पा०३।२।४३।

२८ क्षेम-प्रिय-मद्राद् अण् च । पा०३।२।४४।

२९ आशिताद् भुवः भाव-करणयोः । पा०३।२।४५।

३० भृ-वृ-तृ-जि-सहि-तपि-दमो नाम्नि । पा०३।२।४६।

३१ धारेर्धर् च । पा०३।२।४६।

३२ गमः । पा०३।२।४७।

३३ विहायसो विह च । पा०३।२।३८ वा०२।

३४ खड् । पा०३।२।३८वा०३।

३५ डः । पा०३।२।३८वा०४।

३६ उरगः । पा०३।२।४८वा०२।

३७ हनः । पा०३।२।४६,५०।

३८ शीर्ष-कुमाराद् णिनिः । पा०३।२।५१।

३६ टक् । पा०३।२।५२,५३।

४० शक्तौ हस्ति-कपाटात् । पा०३।२।५४।

४१ नगराद् अहस्तिनि । पा०३।२।५३ भा०।

४२ पाणिघ-ताडघौ शिल्पिनि । पा०३।२।५५।

४३ राजघः । पा०३।२।५५वा०१।

४४ गः । पा०३।२।८।

४५ सीधु-सुरात् पिबः । पा०३।२।८वा०१।

४६ सुभग-आढ्य-स्थूल-पलित-नग्न-अन्ध-प्रियाद् अच्वेर्भुवः खिष्णुच्-खुकञौ । पा०३।२।५७,५६।

४७ कृञः करणे ख्युन् । पा०३।२।५६।

४८ स्पृशः अनुदकात् क्विन् । पा०३।२।५८।

४६ दधृग्-उष्णिक्-ऋुञ्चः । पा०३।२।५६।

५० अञ्चु-युजः । पा०३।२।५६।

५१ समान-अन्य-त्यदादेः उपमानाद् व्याप्ये दृशः क्स-कञौ च । पा०३।२।६०+वा०१। काशिका ३।२।६०।

५२ भजो ण्विः । पा०३।२।६२।

५३ क्विप्-विच्-मनिन्-क्वनिप्-वनिपः । पा०३।२।७४,७६।

५४ दुहो दुघः । पा०३।२।७०।

५५ आवश्यके णिनिः । पा०३।३।१७०।

५६ अजातेः शील-आभीक्ष्ण्ययोः । पा०३।२।७८,८१।

५७ साधोः । पा०३।२।७८वा०१।

५८ कर्तुः उपमानात् । पा०३।२।७६।

५६ व्रते । पा०३।२।८०।

६० मनः । पा०३।२।८२।

६१ आत्मनि खश्च । पा०३।२।८३।

६२ भूते । पा०३।२।८४।

६३ यजः । पा०३।२।८५।

६४ हनः कुत्सायाम् । पा०३।२।८६। काशिका ३।२।८६।

६५ डः । पा०३।२।६७।

६६ क्तवतुः । पा०३।२।१०२। पा०१।१।२६।

६७ भाव-आप्ययोः क्तः । पा०३।२।१०२। पा०३।४।७०।

६८ कर्तरि च आरम्भे । पा०३।४।७१।

६६ श्लिष-शीङ-स्था-आस-वस-जन-रुह-जृभ्यः । पा०३।४।७२।

७० गत्यर्थाऽनाप्याद् आधारे च । पा०३।४।७२,७६।

७१ आहारार्थात् । पा०३।४।७६।

७२ जृषः अतृन् । पा०३।२।१०४।

७३ श्रु-सद्-वसो लिट् वा । पा०३।२।१०८।

७४ लिटः क्वसुः । पा०३।२।१०७।

७५ ईयिवान्-अनाश्वान्-अनूचानः । पा०३।२।१०६।

७६ लुङ । पा०३।२।११०।

७७ अनद्यतने लङ् । पा०३।२।१११।
७८ स्मृत्युक्तौ लृट् । पा०३।२।११२।
७९ न यदि । पा०३।२।११३।
८० वा आकाङ्क्षायाम् । पा०३।२।११४।
८१ परोक्षे लिट् । पा०३।२।११५।
८२ वर्तमाने लट् । पा०३।२।१२३।
८३ विदेः श्वसुः । पा०७।१।३६।
८४ शतृ । पा०३।२।१२४।
८५ इङः शक्तौ । पा०३।२।१३०।
८६ शानच् । पा०३।२।१२४।
८७ शक्ति-वयः-शीलेषु । पा०३।२।१२९।
८८ तौ लृटः । पा०३।२।१२७।
पा०३।३।१४।
८९ शील-साधु-धर्मेषु तृन् ।
पा०३।२।१३४,१३५।
९० निरा-अलंभ्यां कुः इष्णुच् ।
पा०३।२।१३६।
९१ उदः पच-पत-मदः । पा०३।२।१३६।
९२ प्रजन-रुचि-अपत्रप-वृतु-वृधु-
सह-चर-भ्राजः । पा०३।२।१३६।
तथा काशिका३।२।१३८।
९३ भुवः । पा०३।२।१३८।
९४ जि-ग्लश्च क्स्नुः । पा०३।२।१३९।
९५ स्थास्नुः । पा०३।२।१३९।
९६ त्रसि-गृधि-धृषि-क्षिपेः क्नुः ।
पा०३।२।१४०।
९७ चाल-शब्दार्थाद् अनाप्याद् युच् ।
पा०३।२।१४८।
९८ तङ्वतो हलादेरङः । पा०३।२।१४९।
९९ जु-चङ्क्रम्य-दन्द्रम्य-सृ-गृधि-ज्वल-
शुच-लष-पत-पदः । पा०३।२।१५०।
१०० क्रुध-भूषार्थात् । पा०३।२।१५१।
१०१ न य-दीक्षः । पा०३।२।१५२,१५३।
१०२ लष-पत-पद-स्था-भू-शॄ-वृष-हन-कम-
गमः उकञ् । पा०३।२।१५४।
१०३ जल्प-भिक्ष-कुट्ट-लुण्ट-वृङः षाकन् ।
पा०३।२।१५५।
१०४ स्पृहि-गृहि-पति-शीङः आलुच् ।
पा०३।२।१५८+वा०१।
१०५ धे-सि-शद-सदो रुः ।
पा०३।२।१५९।
१०६ सृ-घस्-अदः क्मरच् ।
पा०३।२।१६०।
१०७ भञ्जि-भास-मिदो घुरच् ।
पा०३।२।१६१।
१०८ विदि-भिदि-च्छिदेः कुरच् ।
पा०३।२।१६२।
१०९ इण्-जि-सृ-नशः क्वरप् ।
पा०३।२।१६३।
११० गत्वरः । पा०३।२।१६४।
१११ जागुः ऊकः । पा०३।२।१६५।
११२ यज-जप-दह-दशो यङः ।
पा०३।२।१६६।
११३ सहि-चलि-वहः कि-किनौ ।
पा०३।२।१७१भा०।
११४ पापतिः । पा०३।२।१७१वा०४।
११५ चक्रि-सस्रि-जज्ञयः ।
पा०३।२।१७१वा०३।
११६ स्मि-अजस-हिंस-दीप-नम-कम-
कम्पो रः । पा०३।२।१६७।
११७ सन्-आशंस उः । पा०३।२।१६८।
११८ विन्दुः इच्छुः । पा०३।२।१६९।

११९ स्वप्नक्-तृष्णक् । पा०३।२।१७२।
१२० शॄ-वन्देः आरुः । पा०३।२।१७३।
१२१ भियः क्रुः । पा०३।२।१७४।
१२२ स्था-भास-पिस-कसो वरच् । पा०३।२।१७५।
१२३ यो यङः । पा०३।२।१७६।

[प्रथमस्य अध्यायस्य द्वितीयः पादः समाप्तः]

## [तृतीयः पादः]

१ उणादयः । पा०३।३।१।
२ भविष्यति लृट् । पा०३।३।१३,३।
३ अनद्यतने लुट् । पा०३।३।१५।
४ माङि लुङ । पा०३।३।१७५।
५ स्मपरे लङ च । पा०३।३।१७६।
६ तुमुन् भावे क्रियायां तदर्थायाम् । पा०३।३।१०+भा०।
७ घञ् कारके च । पा०३।३।१६,१८,१९।
८ संख्यातात् । पा०३।३।२०।
९ इङः पिद् वा । पा०३।३।२१+वा०१।
१० शॄ वायु-वर्ण-निवृतेषु । पा०३।३।२१वा०२।
११ प्रादिभ्यो रुवः । पा०३।३।२२।
१२ समो यु-द्रु-दुवः । पा०३।३।२३।
१३ वेः क्षु-श्रुवः । पा०३।३।२५।
१४ श्रि-भुवः अप्रादेः । पा०३।३।२४।
१५ नियः । पा०३।३।२४।
१६ अव-उदः । पा०३।३।२६।
१७ परेर्द्यूते । पा०३।३।३७।
१८ प्रात् स्तु-द्रु-स्तुवः । पा०३।३।२७।
१९ निर्-अभेः पू-ल्वः । पा०३।३।२८।
२० नि-उदो ग्रः । पा०३।३।२९।
२१ कॄ धान्ये । पा०३।३।३०।
२२ नीवाराः । पा०३।३।४८।
२३ यज्ञे संस्तावः । पा०३।३।३१।
२४ प्रस्त्रोऽन्यत्र । पा०३।३।३२।
२५ प्रथने वेः अशब्दे । पा०३।३।३३।
२६ छन्दोनाम्नि । पा०३।३।३४।
२७ अवात् त्रश्च । पा०३।३।१२०।
२८ न्यायो नये । पा०३।३।३७।
२९ पर्यायः क्रमे । पा०३।३।३८।
३० वि-उपात् शीङः । पा०३।३।३९।
३१ हस्तप्राप्ये चेः अस्तेये । पा०३।३।४०।
३२ चिति-राशि-वास-देहेषु चः कः । पा०३।३।४१।
३३ संघे अनुत्तराऽधरे । पा०३।३।४२।
३४ उदः श्रि-यु-पू-द्रुवः । पा०३।३।४९।
३५ आक्रोशे नि-अवाद् ग्रहः । पा०३।३।४५।
३६ समः मुष्टौ । पा०३।३।३६।
३७ परेः यज्ञे । पा०३।३।४७।
३८ प्रात् लिप्सायाम् । पा०३।३।४६।
३९ वा वणिजाम् । पा०३।३।५२,५०।
४० रश्मौ । पा०३।३।५३।
४१ अवाद् वर्षप्रतिबन्धे । पा०३।३।५१।
४२ आङो रु-प्लोः । पा३।३।५०।

४३ वृञः आच्छादे । पा०३।३।५४।
४४ परेर्भुवः अवज्ञाने । पा०३।३।५५।
४५ एः अच् । पा०३।३।५६।
४६ स्था-स्ना-पा-व्यधि-हनि-युधः कः । पा०३।३।५८वा०४।
४७ ऋत्-ओः अप् । पा०३।३।५७।
४८ ग्रह-वृ-दृ-निश्चि-गम-वश-रणः । पा०३।३।५८+वा०३।
४९ प्रादिभ्यः अदः । पा०३।३।५९।
५० नेर्ण च । पा०३।३।६०।
५१ व्यध-जपः अप्रादेः । पा०३।३।६१।
५२ स्वन-हसो वा । पा०३।३।६२।
५३ यमः सं-वि-उपाच्च । पा०३।३।६३।
५४ नेः । पा०३।३।६३।
५५ गद-नद-पठ-स्वनः । पा०३।३।६४।
५६ क्वणो वीणायाश्च । पा०३।३।६५।
५७ पणः परिमाणे । पा०३।३।६६।
५८ मदः अप्रादेः । पा०३।३।६७।
५९ प्र-संभ्यां हर्षे । पा०३।३।६८।
६० सम्-उद्भ्याम् अजः पशुषु । पा०३।३।६९।
६१ प्रजने सर्तेः । पा०३।३।७१।
६२ ह्वः । पा०३।३।७५।
६३ निपानम् आहावः । पा०३।३।७४।
६४ वधः घातः । पा०३।३।७६।
६५ मूर्तौ घनः । पा०३।३।७७।
६६ गृहांशे प्रघाणः । पा०३।३।७९।
६७ परिघ-उद्घ-निघाः । पा०३।३।८४,८६,८७।
६८ ड्वितः क्त्रिः । पा०३।३।८८।
६९ ट्वितः अथुच् । पा०३।३।८९।
७० विछ-रक्षो नङः । पा०३।३।९०।
७१ प्रादिभ्यः दा-धः किः । पा०३।३।९२।
७२ व्याप्याद् आधारे । पा०३।३।९३।
७३ अभिविधौ इनुण् । पा०३।३।४४।
७४ स्त्रियां क्तिन् । पा०३।३।९४।
७५ ऊति-यूति-जूति-साति-हेति-कीर्तयः । पा०३।३।९७।
७६ व्यतिहारे णच् । पा०३।३।४३।
७७ नाम्नि क्तिच् । पा०३।३।१७४।
७८ समज-मन-विद-सु-शी-भृञ्-इणः भावे क्यप् । पा०३।३।९९।
७९ नेः सत्-पतः । पा०३।३।९९ ।
८० कृ-व्रज-यजः । पा०३।३।१००,९८।
८१ मृगया-अटाट्ये । पा०३।३।१०१भा०।
८२ परेः सृ-चरो यः । पा०३।३।१०१भा०।
८३ जागुः । पा०३।३।१०१भा०।
८४ अः सनाद्यन्ताच्च । पा०३।३।१०१भा०।१०२।
८५ गुरोर्हलः । पा०३।३।१०३।
८६ भिदादिषितोऽङः । पा०३।३।१०४।
८७ आतः अन्तः-प्रादिभ्यः । पा०३।३।१०६ तथा काशिका ३।३।१०६।
८८ कुम्बि-चर्चिभ्याम् । पा०३।३।१०५।
८९ णि-श्रन्थ-ग्रन्थ-विद-आस-घट्ट-वन्दो युच् । पा०।३।३।१०७+वा०१।
९० इषः अनिच्छायाम् । पा०३।३।१०७ वा०२।
९१ ण्वुच् । पा०३।३।१११।
९२ प्रश्न-आख्यानयोः इञ् च । पा०३।३।११०।
९३ संपदादिभ्यः क्विप् । पा०३।३।१०८ वा०६।

९४ आक्रोशे नञः अनिः । पा०३।३।११२।

९५ ग्ला-हा-ज्यः। पा०३।३।९५ वा०४।

९६ इ-क्ति-श्तिपः स्वरूपे । पा०३।३।१०८ वा०२।

९७ ल्युट् । पा०३।३।११५।

९८ ष्ठिवु-सिवो दीर्घश्च ।

९९ कृञः कर्तरि ।

१०० घः । पा०३।३।११८।

१०१ व्रज-व्यजौ। पा०३।३।११९।

१०२ खनः डर-इकौ च । पा०३।३।१२५+भा०।

१०३ ईषद्-दुः-सुभ्यः खल् । पा०३।३।१२६।

१०४ कर्तृ-आप्याभ्यां च भू-कृञः । पा०३।३।१२७।

१०५ आतः युच् । पा०३।३।१२८।

१०६ शासि-युधि-दृशि-धृषि-मृषः । पा०३।३।१३० वा०१+भा०।

१०७ लिङि अतिपत्तौ लृङ । पा०३।३।१३९।

१०८ आ शेषाद् भूते वा । पा०३।३।१४०,१४१।

१०९ गर्हायां कथमि लिङ । पा०३।३।१४३,१४२।

११० किमि लृट् च । पा०३।३।१४४।

१११ क्रोध-अश्रद्धयोः। पा०३।३।१४५।

११२ किंकिल-अस्त्यर्थयोः लृट्। पा०३।३।१४६।

११३ यद्-यदि-यदा-जातुषु लिङ । पा०३।३।१४७+वा०१।

११४ यच्च-यत्रयोर्गर्हायां च । पा०३।३।१४८,१४९।

११५ आश्चर्ये । पा०३।३।१५०।

११६ शेषे लृट् । पा०३।३।१५१।

११७ उत-अप्योः वाढार्थे लिङ । पा०३।३।१५२।
तथा काशिका३।३।१५२।

११८ संभावने अलमर्थे तदर्थाप्रयोगे । पा०३।३।१५४।

११९ धातूक्तौ अयदि वा । पा०३।३।१५५।

१२० हेतु-फलयोः । पा०३।३।१५६।

१२१ विधि-संप्रश्न-प्रार्थनेषु । पा०३।३।१६१।

१२२ लोट् । पा०३।३।१६२।

१२३ प्रैष-अनुज्ञा-प्राप्तकालेषु । पा०३।३।१६३।

१२४ लिङ च ऊर्ध्वमौहूर्तिके । पा०३।३।१६४।

१२५ स्मे लोट् । पा०३।३।१६५।

१२६ अधीष्टौ । पा०३।३।१६६।

१२७ काल-समय-वेलासु लिङ यदि । पा०३।३।१६७,१६८।

१२८ अर्ह-शक्त्योः । पा०३।३।१६९,१७२।

१२९ अलं-खल्वोः प्रतिषेधे क्त्वा वा । पा०३।४।१८।

१३० मेङः । पा०३।४।१९।

१३१ एककर्तृकयोः पूर्वात् । पा०३।४।२१।

१३२ आभीक्ष्ण्ये णमुल् च । पा०३।४।२२।

१३३ पूर्व-अग्रे-प्रथमेषु । पा०३।४।२४।

१३४ व्याप्याद् आक्रोशे कृञः खमुञ् । पा०३।४।२५।

१३५ स्वाद्वर्थात् अदीर्घात् ।
पा०३।४।२६+वा०१।
१३६ जीवाद् ग्रहो णमुलू स चानु ।
पा०३।४।३६,४६।
१३७ हस्तेन । पा०३।४।३९।
१३८ उपमानात् कर्तुश्च ।
पा०३।४।४५,४३।
१३९ उपदंशस्तृतीयायाम् । पा०३।४।४७।
१४० हिंसार्थात् एकाप्यात् । पा०३।४।४८।
१४१ सप्तम्यां च उपात् पीड-रुध-कर्षः ।
पा०३।४।४९।
१४२ आसत्तौ । पा० ३।४।५०।
१४३ प्रमाणे । पा०३।४।५१।
१४४ पञ्चम्यां त्वरायाम् । पा०३।४।५२।
१४५ द्वितीयायाम् । पा०३।४।५३।
१४६ अध्रुवे स्वाङ्गे । पा०३।४।५४।
१४७ पीडायाम् । पा ०३।४।५५।
१४८ विशि-पति-पदि-स्कन्दां वीप्सा-
आभीक्ष्ण्ययोः । पा०३।४।५६।
१४९ असु-तृषः कालेषु विच्छेदे ।
पा०३।४।५७।
१५० नाम्नि ग्रह-आदिशः ।
पा०३।४।५८।

[प्रथमस्य अध्यायस्य तृतीयः पादः समाप्तः]

# [चतुर्थः पादः]

१ लः तिप्-तस्-झि-सिप्-थस्-थ-मिप्-
वस्-मस्-ता-तां-झ-थास्-आथां-ध्वम्-
इट्-वहिं-महिङः । पा०।३।४।७७,७८।
२ अतः आतः इत् ।
पा०७।२।८१,८०। पा०६।१।९६।
३ झः अन्तः । पा०७।१।३।
४ द्विरुक्ताद् अत् । पा०७।१।४।
५ जक्षादिभ्यः पञ्चभ्यः । पा०६।१।६,५।
६ तङि अनतः । पा०७।१।५।
७ शीङो रत् । पा०७।१।६।
८ वेत्तेर्वा । पा ७।१।७।
९ लिटः इरच् । पा०३।४।८१।
१० तस्य एश् । पा०३।४।८१।
११ अतङां णल्-अतुस्-उस्-
थल्-अथुस्-अण्-अल्-व-माः ।
पा०३।४।८२।
१२ विदो लटो वा । पा०३।४।८३।
१३ ब्रुवः पञ्चानामादित आह च ।
पा०३।४।८४।
१४ आतो णल औः । पा०७।१।३४।
१५ टित् तङाम् एत् । पा०३।४।७९।
१६ आमः । पा०३।४।७९।
१७ थासः से । पा०३।४।८०।
१८ लुट आद्यानां डा-रौ-रसः ।
पा०२।४।८५।
१९ तङाम् । पा०२।४।८५।
२० लोट एः उः । पा०३।४।८६,८५।
२१ सेः हिङ । पा०३।४।८७।
२२ आशिषि तु-ह्योः तातङ वा ।
पा०७।१।३५।
२३ मेः आनिः । पा०३।४।८९।
२४ आम् एतः । पा०३।४।९०।

२५ स्-वो वा-ऽमौ । पा०३।४।९१।
२६ इडादीनाम् ऐप् । पा०३।४।९३।
२७ व्-मोः टाप् । पा०३।४।९२।
२८ त-स्थ-स्थानां तां-तं-ता ङितश्च ।
पा०३।४।१०१।
२९ वस्-मसोर्लोपः ।
पा०३।४।९९,९८,९७।
३० इतः अतङि । पा०३।४।१००,९७।
३१ मिपः अम् । पा०३।४।१०१।
३२ लिङः सीयुट् । पा०३।४।१०२।
३३ यासुट् अतङः कित् ।
पा०३।४।१०४,१०३।
३४ ङित् अनाशिषि । पा०३।४।१०३।
३५ अत् इय् । पा०७।२।८०।
३६ सो लोपः अनन्त्यस्य । पा०७।२।७९।
३७ झस्य रन् । पा०३।४।१०५ ।
३८ इटः अत् । पा०३।४।१०६।
३९ सुट् त-थोः । पा०३।४।१०७।
४० झेः जुस् । पा०३।४।१०८।
४१ सिचः । पा०३।४।१०९।
४२ आतः । पा०३।४।११०।
४३ लङो द्विषश्च वा ।
पा०३।४।१११,११२।
४४ विदः । पा०३।४।१०९।
४५ अति । पा०३।४।१०९।
४६ तङाना यथापाठम् । पा०१।३।१२।
४७ भाव-आप्ययोः । पा०१।३।१३।
४८ ङितः । पा०१।३।१२।
४९ विनिमये । पा०१।३।१४।
५० न गति-हिंसा-शब्दार्थहसः ।
पा०१।३।१५+वा०१।
५१ नेर्विशः । पा०१।३।१७।
५२ परि-वि-अवात् क्रियः । पा०१।३।१८।
५३ वि-पराभ्यां जेः । पा०१।३।१९।
५४ आङः दः । पा०१।३।२०।
५५ न स्वप्रसारणे ।
पा०१।३।२०+वा०१,२।
५६ गमेः क्षान्तौ । पा०१।३।२१ वा०२।
५७ नु-प्रच्छः । पा०१।३।२१ वा०६।
५८ क्रीडः अनु-परिभ्यां च ।
पा०१।३।२१।
५९ समः अकूजने । पा०१।३।२१ वा०१।
६० अपस्किरः । पा०१।३।२१ वा०४।
६१ ह्वः गतिशीले । पा०१।३।२१ वा०५।
६२ आशिषि नाथः । पा०१।३।२१ वा०७।
६३ शपः शपथे । पा०१।३।२१ वा०८।
६४ स्थः प्रतिज्ञा-निर्णय-प्रकाशनेषु ।
पा०१।३।२२ वा०१। पा०१।३।२३।
६५ सं-वि-प्र-अवात् । पा०१।३।२२।
६६ उदः अनूर्ध्वेहायाम् ।
पा०१।३।२४+वा०१।
६७ उपात् मन्त्रेण । पा०१।३।२५।
६८ पथि-आराधनयोः ।
पा०१।३।२५ भा०।
६९ वा लिप्सायाम् । पा०१।३।२५ वा०२।
७० अव्याप्यात् । पा०१।३।२६।
७१ समः गम्-ऋछि-प्रछि-स्वृ-श्रु-वेत्ति-
अर्ति-दृशः । पा०१।३।२९+वा०१,२।
७२ प्रादिभ्यः असु-ऊहो वा ।
पा०१।३।२९ वा०३।
७३ आङः यम-हनः स्वाङ्गाप्याच्च ।
पा०१।३।२८+वा०१।
७४ व्युदस्तपः । पा०१।३।२७।
७५ तपआप्यात् । पा०३।१।८८।

७६ नि-सं-वि-उपेभ्यः ह्वः । पा०१।३।३०।
७७ स्पर्धायाम् आङः । पा०१।३।३१।
७८ सूचन-अवक्षेपण-सेवा-साहस-
यत्न-कथा-उपयोगेषु कृञः ।
पा १।३।३२।
७९ अधेः शक्तौ । पा०१।३।३३।
८० वेः शब्दाप्यात् । पा०१।३।३४।
८१ अव्याप्यात् । पा०१।३।३५।
८२ पूजा-उत्सङ्ग-उपनयन-ज्ञान-भृति-
व्यय-विगणनेषु नियः । पा०१।३।३६।
८३ कर्तृस्थामूर्ताप्यात् । पा०१।३।३७।
८४ वृत्ति-उत्साह-तायनेषु क्रमः ।
पा०१।३।३८।
८५ परा-उपात् । पा०१।३।३९।
८६ आङो ज्योतिरुद्गतौ ।
पा०१।३।४०+वा०१।
८७ वेः पादाभ्याम् । पा०१।३।४१।
८८ प्र-उपाद् आरम्भे । पा०१।३।४२।
८९ अप्रादेः वा । पा०१।३।४३।
९० निह्नवे ज्ञः । पा०१।३।४४।
९१ अव्याप्यात् । पा०१।३।४५।
९२ सं-प्रतेः अस्मृतौ । पा०१।३।४६।
९३ ज्ञान-यत्न-उपच्छन्दनेषु वदः ।
पा०१।३।४७।
९४ अनोः अव्याप्यात् । पा०१।३।४९।
९५ विमतौ । पा०१।३।५०।
९६ व्यक्तं सहोक्तौ । पा०१।३।४८।
९७ तयोर्वा । पा०१।३।५०।
पा०१।३।४८ भा०।
९८ अवाद् गिरः । पा०१।३।५१।
९९ समः प्रतिज्ञायाम् । पा०१।३।५२।
१०० किरादि-श्रन्थ-ग्रन्थ-सनाम् आप्ये ।
पा०३।१।८७ वा०१८।
पा०३।१।८९ भा०।
१०१ लुङि अचः । पा०३।१।६२।
पा०३।१।४३।
१०२ स्नु-नमः स्वयम् ।
पा०३।१।८९। पा०३।१।८७।
१०३ सृजः श्राद्धे ।
पा०३।१।८७ वा०१५+भा०।
१०४ शे श्यन् ।
पा०३।१।८७ वा०१५+भा०।
१०५ लुङि ते चिण् ।
१०६ उदश्चरः साप्यात् ।
पा०१।३।५३।
१०७ समस्तृतीयायुक्तात् । पा०१।३।५४।
१०८ दाणः सा चेत् चतुर्थ्यर्थे ।
पा०१।३।५५।
१०९ उपयम उद्वाहे ।
पा०१।३।५६ तथा काशिका १।३।५६।
११० आमः कृञः प्राग्वत् ।
पा०१।३।६३। पा०१।३।६२।
१११ सनः । पा०१।३।६२।
११२ स्मृ-दृशः । पा०१।३।५७।
११३ अननोर्ज्ञः । पा०१।३।५८।
११४ श्रुवः अनाङ-प्रतेः । पा०१।३।५९।
११५ शदेः शिति । पा०१।३।६०।
११६ मृङो लुङ-लिङोश्च । पा० १।३।६१।
११७ प्रादेः अजाद्यन्ताद् युजेः अयज्ञपात्रेषु।
पा०१।३।६४+भा०।
११८ समः क्ष्णुवः । पा०।१।३।६५।
११९ भुजः अपालने । पा०१।३।६६।
१२० प्रयोजकाद् भी-स्मेर्णेः ।
पा०१।३।६८। पा०१।३।६७।

१२१ गृधि-वञ्च्वेः प्रलम्भने । पा०१।३।६९।
१२२ लियः पूजा-अभिभवयोश्च । पा०१।३।७०।
१२३ मिथ्यायोगे कृञः अभ्यासे । पा०१।३।७१।
१२४ फलवति । पा०१।३।७२।
१२५ पाठे विभाषितात् । पा०१।३।७२।
१२६ ञितः । पा०१।३।७२।
१२७ अपवदः । पा०१।३।७३।
१२८ सम्-उद्-आङ्भ्यो यमेः अग्रन्थे । पा०१।३।७५।
१२९ अप्रादेर्ज्ञः । पा०१।३।७६।
१३० शब्दान्तरगतौ वा । पा०१।३।७७।
१३१ न अनु-पराभ्यां कृञः । पा०१।३।७९,७८।
१३२ प्रति-अति-अभीनां क्षिपः । पा०१।३।८०।
१३३ प्राद् वहः । पा०१।३।८१।
१३४ परेर्मृषश्च । पा०१।३।८२ तथा काशिका १।३।८२।
१३५ रमो वि-आङोश्च । पा०१।३।८३।
१३६ उपात् । पा०१।३।८४।
१३७ अव्याप्याद् वा । पा०१।३।८५।
१३८ अणौ चित्तवत्कर्तृकाद् णेः । पा०१।३।८८,८६।
१३९ चलन-आहारार्थात् । पा०१।३।८७।
१४० प्रु-द्रु-स्रु-बुध-युध-इङ-नश-जनः । पा०१।३।८६।
१४१ न पा-दम-आयम-आयस-परिमुह-अत्ति-रुचि-नृति-धेट्-वद-वसः । पा०१।३।८९+वा०१ तथा काशिका १।३।८७।
१४२ वा क्यषः । पा०१।३।९०।
१४३ द्युद्भ्यो लुङि । पा०१।३।९१।
१४४ वृद्भ्यः स्य-सनोः । पा०१।३।९२।
१४५ लुटि क्लृपः । पा०१।३।९३।
१४६ युष्मदि मध्यमत्रयम् । पा०१।४।१०५,१०१।
१४७ अस्मदि उत्तमम् । पा०१।४।१०७।
१४८ एक-द्वि-बहुषु । पा०१।४।१०२। पा०१।४।२१,२२।

[प्रथमस्य अध्यायस्य चतुर्थः पादः समाप्तः]

[चान्द्रे व्याकरणे प्रथमः अध्यायः समाप्तः]

## [द्वितीयः अध्यायः प्रथमः पादः]

१ सु-औ-जस्–अम्-औट्-शस्–
टा-भ्यां-भिस्–ङे-भ्यां-भ्यस्–
ङसि-भ्यां-भ्यस्–ङस्-ओस्-आम्–
ङि-ओस्-सुप् । पा०४।१।२।

२ अतो भिस ऐस् । पा०७।१।६।

३ इदम्-अदसोः कात् । पा०७।१।११।

४ टा-ङसोः इन-स्यौ । पा०७।१।१२।

५ ङे-ङस्योः य-आतौ ।
पा०७।१।१३,१२।

६ सर्वादिभ्यः स्मै-स्मातौ ।
पा०७।१।१४,१५।

७ ङेः स्मिन् । पा०७।१।१५।

८ जसः शीः । पा०७।१।१७।

९ आत् आमः साम् । पा०७।१।५२,५०।

१० न अन्यच्च नामा-ऽप्रधानात् ।
पा०१।१।२७ वा०२।

११ तृतीयार्थयोगे । पा०१।१।३०+भा०।

१२ चार्थसमासे । पा०१।१।३१।

१३ शी वा । पा०१।१।३२।

१४ प्रथम-चरम-तय-अय-अल्प-अर्ध-नेम-
कतिपयात् । पा०१।१।३३।

१५ पूर्वादिभ्यो नवभ्यः स्मात्-स्मिनौ च ।
पा०७।१।१६। पा०१।१।३४-३६।

१६ स्मै च तीयात् । पा०१।१।३६ वा०३।

१७ आपः औतः शीः । पा०७।१।१८,१७।

१८ नपुंसकात् । पा०७।१।१९।

१९ जस्-शसोः शिः । पा० ७।१।२०।

२० अष्टाभ्यः औश् । पा ७।१।२१।

२१ ष्-णः संख्याया लुक् ।
पा०७।१।२२। पा०१।१।२४,२३।

२२ कतेः । पा०१।१।२५।

२३ सु-अमोः नपुंसकात् । पा०७।१।२३।

२४ अतः अम् । पा०७।१।२४।

२५ डतरादिभ्यः पञ्चभ्यः अनेकतरात् तः।
पा०७।१।२५,२६ वा०१।

२६ युष्मद्-अस्मद्भ्यां ङसः अश् ।
पा०७।१।२७।

२७ ङे-सुटः अम् । पा०७।१।२८।

२८ शसः नः । पा०७।१।२९।

२९ भ्यसः अभ्यम् । पा०७।१।३०।

३० ङसेश्च अत् । पा०७।१।३१,३२।

३१ आमः आकम् । पा०७।१।३३।

३२ ह्रस्व-आपो नुट् । पा०७।१।५४।

३३ संख्याया अनतः । पा०७।१।५५।

३४ त्रयाणाम् । पा०७।१।५३।

३५ स्त्री-यूभ्याम् । पा०७।१।५४।
पा०१।४।३।

३६ सेयुवो वा । पा०१।४।५।

३७ स्त्रीणाम् । पा०१।४।४।

३८ सुपः असंख्याद् लुक् ।
पा०२।४।८२,५८।

३९ ऐकार्थ्ये । पा०२।४।७१।
पा०१।२।४५,४६।

४० ततः प्राक् कारकात् ।
पा०१।१।४१,३७।

४१ न अतः अम् अपञ्चम्याः ।
पा०२।४।८३।

४२ तृतीया-सप्तम्योर्वा । पा०२।४।८४।

४३ क्रियाप्ये द्वितीया । पा०२।३।२।
पा०१।४।४९-५१।

४४ गति-बोध-आहार-शब्दार्थ-
अनाप्यानां प्रयोज्ये । पा०१।४।५२।
४५ हृ-क्रोर्वा । पा०१।४।५३।
४६ दृश्-अभिवाद्योः तङाने ।
पा०१।४।५३ वा०१।
४७ न नी-खादि-अदि-ह्वा-शब्दाय-क्रन्दः ।
पा०१।४।५२ वा०५,१भा०।
४८ वहेः अनियन्तृके ।
पा०१।४।५२ वा०६।
४९ भक्षेः अहिंसायाम् ।
पा०१।४।५२ वा०७।
५० समया-निकषा-हा-धिग्-अन्तरा-
अन्तरेणयुक्तात् पा०२।३।२
वा०१+भा०।पा०२।३।४।
५१ द्वित्वे अध्यादिभिः ।
पा०२।३।२ भा०।
५२ सर्व-अभि-परि-उभयात् तसा ।
पा०२।३।२ भा०।
५३ एनपा । पा०२।३।३१।
५४ लक्षण-वीप्सा-इत्थंभूतेषु अभिना ।
पा०१।४।९१,९०,८३। पा०२।३।८।
५५ प्रति-परिभ्यां भागे च।पा०१।४।९०।
५६ अनुना । पा०१।४।९०।
५७ सहार्थे । पा०१।४।८५।
५८ हीने । पा०१।४।८६।
५९ उपेन । पा०१।४।८७।
६० सप्तमी आधिक्ये । पा०२।३।९।
६१ स्वाम्ये अधिना । पा०२।३।९।
पा०१।४।९७।
६२ कर्तरि तृतीया । पा०२।३।१८।
६३ करणे । पा०२।३।१८।
६४ परिक्रियश्चतुर्थी च । पा०१।४।४४।
६५ सहार्थेन । पा०२।३।१९।
६६ लक्षणे । पा०२।३।२१।
६७ संज्ञः व्याप्ये वा । पा०२।३।२२।
६८ हेतौ । पा०२।३।२३।
६९ ऋणे पञ्चमी । पा०२।३।२४।
७० गुणे वा । पा०२।३।२५।
७१ षष्ठी हेतुना । पा०२।३।२६।
७२ सर्वाः सर्वादिभ्यः हेत्वर्थैः ।
पा०२।३।२७+भा०।
७३ संप्रदाने चतुर्थी । पा०२।३।१३।
७४ रुचिमति । पा०१।४।३३।
७५ धारेः उत्तमर्णे । पा०१।४।३५।
७६ कोपस्थाने अनाप्ये ।
पा०१।४।३७,३८।
७७ प्रति-अनुभ्यां गृणः व्याप्ये ।
पा०१।४।४१।
७८ नमः-स्वस्ति-स्वाहा-स्वधा-वषट्-
शक्तार्थैः । पा०२।३।१६+वा०२।
७९ तादर्थ्ये । पा०२।३।१३ वा०१।
८० मन्याप्ये कुत्सायाम् अनावादौ वा ।
पा०२।३।१७+भा०।
८१ अवधेः पञ्चमी ।
पा०२।३।२८।पा०१।४।२४।
८२ परि-अपाभ्यां वर्जने ।
पा०२।३।१०।पा०१।४।८८।
८३ प्रतिना प्रतिनिधि-प्रतिदानयोः ।
पा०२।३।११। पा०१।४।९२।
८४ ऋते द्वितीया च । पा०२।३।२९।
८५ विना तृतीया च । पा०२।३।३२।
तथा काशिका २।३।३२।
८६ पृथग्-नानाभ्याम् । पा०२।३।३२।
८७ स्तोक-अल्प-कृच्छ्र-कतिपयाद्
असत्त्वार्थात् करणे । पा०२।३।३३।

८८ सप्तमी आधारे । पा०२।३।३६। पा०१।४।४५।
८९ निमित्ताद् व्याप्येन । पा०२।३।३६। वा०६।
९० यत्क्रिया क्रियाचिह्नम् । पा०२।३।३७।
९१ षष्ठी च अनादरे । पा०२।३।३८।
९२ यतः निर्धारणम् । पा०२।३।४१।
९३ अर्थमात्रे प्रथमा । पा०२।३।४६।
९४ संबोधने । पा०२।३।४७।
९५ षष्ठी संबन्धे । पा०२।३।५०। तथा काशिका २।३।५०।
९६ तुल्यार्थैस्तृतीया वा । पा०२।३।७२।
९७ हित-सुखाभ्यां चतुर्थी च । पा०२।३।७३।
९८ आशिषि आयुष्य-भद्रार्थ-कुशलार्थैश्च । पा०२।३।७३। तथा काशिका २।३।७३।

[ द्वितीयस्य अध्यायस्य प्रथमः पादः समाप्तः ]

# [ द्वितीयः पादः ]

१ सुप् सुपा एकार्थम् । पा०२।१।४।
२ असंख्यं विभक्ति-समीप-अभाव-ख्याति-पश्चात्-यथा-युगपत्-संपत्-साकल्यार्थे । पा०२।१।६।
३ यथा न तुल्ये । पा०२।१।७।
४ यावद् इयत्त्वे । पा०२।१।८।
५ प्रतिना मात्रार्थे । पा०२।१।९।
६ संख्या-अक्ष-शलाकाः परिणा द्यूते अन्यथावृत्तौ । पा०२।१।१०+भा०।
७ परि-अप-आङ्-बहिर्-अञ्चः पञ्चम्या वा । पा०२।१।११–१३।
८ लक्षणेन अभि-प्रती । पा०२।१।१४।
९ अनुः सामीप्य-आयामयोः । पा०२।१।१५,१६।
१० तिष्ठद्गु-आदीनि । पा०२।१।१७।
११ पारे मध्ये षष्ठ्या वा । पा०२।१।१८।
१२ संख्या वंश्येन । पा०२।१।१९।
१३ नदीभिः । पा०२।१।२०।
१४ अन्यार्थे नाम्नि । पा०२।१।२१।
१५ तन्नपुंसकम् । पा०२।४।१८।
१६ कारकं बहुलम् । पा०२।१।२४–४८।
१७ चतुर्थी प्रकृत्या । पा०२।१।३६ भा०।
१८ विशेषणम् एकार्थेन । पा०२।१।५७।
१९ प्राप्त-आपन्नौ द्वितीयया अत्वं च । पा०२।२।४+भा०।
२० नञ् । पा०२।२।६।
२१ ईषद् गुणेन । पा०२।२।७+वा०१।
२२ षष्ठी । पा०२।२।८।
२३ न ल-निर्धार्य-पूरण-भाव-तृप्तार्थैः । पा०२।२।११,१०।
२४ कु-प्रादयः असुप्विधौ नित्यम् । पा०२।२।१८+वा०१।
२५ ऊर्यादिकारिकाच्विडाचः क्रियार्थैः । पा०१।४।६१,६० वा०१।
२६ अनुकरणम् । पा०१।४।६२।
२७ भूषण-आदर-अनादरेषु अलं-सत्-असतः । पा०१।४।६३,६४।
२८ अग्रहे अन्तः । पा०१।४।६५।
२९ कणे-मनसी तृप्तौ । पा०१।४।६६।

३० पुरस्-अस्तम् असंख्यम् । पा० १।४।६७,६८।
३१ अच्छ गत्यर्थ-वदिभिः । पा० १।४।६९।
३२ अदः अनुपदेशे । पा० १।४।७०।
३३ तिरः अन्तर्धौ । पा० १।४।७१।
३४ कृत्वा वा । पा० १।४।७२।
३५ उपाजे-अन्वाजे । पा० १।४।७३।
३६ साक्षात्-आदीनि । पा० १।४।७४।
३७ अनत्याधाने उरसि-मनसि-मध्ये-पदे-निवचने । पा० १।४।७५,७६।
३८ नित्यं हस्ते-पाणौ उद्वाहे । पा० १।४।७७।
३९ प्राध्वं बन्धे । पा० १।४।७८।
४० जीविका-उपनिषदौ औपम्ये । पा० १।४।७९।
४१ असंख्यं वा अनभिप्रेताख्याने क्त्वा । पा० ३।४।५९।
४२ तिर्यक् समाप्तौ । पा० ३।४।६०।
४३ स्वाङ्गात् तस्-ना-धार्थं भुवा च । पा० ३।४।६१,६२।
४४ तूष्णीम् । पा० ३।४।६३।
४५ अन्वग् आनुकूल्ये । पा० ३।४।६४।
४६ अनेकम् अन्यार्थे । पा० २।२।२४।
४७ तत्र गृहीत्वा तेन प्रहृत्य युद्धे सरूपम् । पा० २।२।२७।
४८ चार्थे । पा० २।२।२९।
४९ समाहारे नपुंसकम् । पा० २।४।१७।
५० अनुवादे चरणानां स्था-इणोर्लुङि । पा० २।४।३+वा० १,२।
५१ अध्वर्यु-क्रतूनामनपुंसकानाम् । पा० २।४।४।
५२ संनिकृष्टपाठानाम् । पा० २।४।५।
५३ अप्राणिजातीनाम् । पा० २।४।६।
५४ नदी-देश-नगराणां भिन्नलिङ्गानाम् । पा० २।४।७।
५५ नित्यवैरिणाम् । पा० २।४।९।
५६ कारूणाम् । पा० २।४।१०।
५७ गवाश्व-आदीनाम् । पा० २।४।११।
५८ प्राणि-तूर्याङ्गाणाम् । पा० २।४।२।
५९ सेनाङ्गानां बहुत्वे । पा० २।४।२+१२वा० १।
६० क्षुद्रजन्तूनाम् । पा० २।४।८।
६१ फलानाम् । पा० २।४।१२ वा० १।
६२ वा वृक्ष-तृण-धान्य-मृग-शकुनि-विशेषाणाम् । पा० २।४।१२।
६३ व्यञ्जनानाम् । पा० २।४।१२।
६४ अश्वबडवौ । पा० २।४।१२,२७।
६५ विरोधिनाम्-अद्रव्याणाम् । पा० २।४।१३।
६६ न दधिपय-आदीनाम् । पा० २।४।१४।
६७ नाम्नि षष्ठ्याः कन्था उशीनरेषु । पा० २।४।२०।
६८ उपज्ञा-उपक्रमं तदादित्वे । पा० २।४।२१।
६९ ईश्वरार्थात् अराज्ञः सभा । पा० २।४।२३। काशिका २।४।२३।
७० अमनुष्यात् । पा० २।४।२३।
७१ अशाला । पा० २।४।२४।
७२ सेना-सुरा-शाला-निशा वा । पा० २।४।२५।
७३ छाया । पा० २।४।२५।
७४ बाहुल्ये । पा० २।४।२२।
७५ पथः असंख्यात् । पा० २।४।३०वा० १।

७६ संख्यादिः समाहारे । पा०२।४।३० वा०२।

७७ अः स्त्री । पा०२।४।३० भा०।

७८ वा आप् । पा०२।४।३० वा०३।

७९ अनो लोपः । पा०२।४।३० भा०।

८० न पात्रादयः । पा०२।४।३० भा०।

८१ रात्र-अह्न-वाकाः पुंसि । पा०२।४।२९+वा०१।

८२ अहः असुदिन-पुण्यात् । पा०२।४।२९,३० भा०।

८३ नपुंसके च अर्धर्च-आदयः। पा०२।४।३१।

८४ सुपि ह्रस्वः । पा०१।२।४७।

८५ गोः अप्रधानस्य अन्त्यस्य । पा०१।२।४८।

८६ ङ्यादीनाम् । पा०१।२।४८।

८७ लुक् अणादिलुकि अगोण्यादीनाम् । पा०१।२।४९,५०+भा०।

[ द्वितीयस्य अध्यायस्य द्वितीयः पादः समाप्तः ]

## [ तृतीयः पादः ]

१ स्त्रियाम् । पा०४।१।३।

२ ऋ-नो ङीप् । पा०४।१।५।

३ उगितः । पा०४।१।६।

४ अञ्चः । पा०४।१।६ वा०२।

५ अहशो वनो र च । पा०४।१।७+वा०१।

६ अन्यार्थे वा । पा०४।१।७ वा०२।

७ पादः । पा०४।१।८।

८ अनः । पा०४।१।२८।

९ ऊधसो नश्च । पा०४।१।२५। तथा पा०५।४।१३१।

१० दाम्नः संख्यादेः । पा०४।१।२७।

११ हायनाद् वयसि । पा०४।१।२७+भा०।

१२ नोपान्तवतः । पा०४।१।१२।

१३ मनः । पा०४।१।११।

१४ ताभ्यां डाप् । पा०४।१।१३।

१५ अजाद्यतः । पा०।४।१।४।

१६ स्वार्थे । पा०४।१।१४।

१७ टित्-ढ-अण्-अञ्-ठक्-ठञ्-नञ्-स्नञ्-कञ्-क्वरप्-ख्युनः । पा०४।१।१५+वा०६+भा०।

१८ यञोऽषावटात् । पा०४।१।१६,७४ वा०१।पा०४।१।७५।

१९ ष्फो वा । पा०४।१।१७।

२० लोहितादिभ्यः शकलान्तेभ्यः । पा०४।१।१८+वा०१।

२१ कौरव्य-आसुरि-माण्डूकात् । पा०४।१।१९+वा०१।

२२ वयसि अचरमे । पा०४।१।२० भा०।

२३ संख्यादेः । पा०४।१।२१।

२४ परिमाणाल्लुकि असंख्या-काल-विस्ता-आचित-कम्बल्यात् । पा०४।१।२२+भा०।

२५ काण्डाद् अक्षेत्रे । पा०४।१।२३।

२६ पुरुषाद् वा । पा०४।१।२४।

२७ केवल-मामक-भागधेय-पाप-अवर-समान-आर्यकृत-सुमङ्गल-भेषजाद् नाम्नि । पा०४।१।३०।

२८ अन्तर्वत्नी गर्भिण्याम् । पा०४।१।३२+वा०१।

२९ पतिवत्नी भार्यायाम् । पा०४।१।३२+वा०१।

३० पत्युर्न ऊढायाम् । पा०४।१।३३।

३१ सपूर्वस्य वा । पा०४।१।३४।

३२ अन्यार्थे । पा०४।१।३४ वा०१।

३३ समानादिभ्यः । पा०४।१।३५।

३४ श्येत-एत-हरित-रोहितात् तो नः । पा०४।१।३९।

३५ क्नः असित-पलिताल् । काशिका ४।१।३९[१]।

३६ षितः ङीष् । पा०४।१।४१।

३७ गौरादिभ्यः । पा०४।१।४१।

३८ भाज-गोण-नाग-स्थल-कुण्ड-काल-कुश-कामुक-कवरात् पक्व-आवपन-स्थूल-अकृत्रिम-अमत्र-कृष्ण-आयसी-रिरंसु-केशवेशेषु । पा०४।१।४२।

३९ नीलात् प्राणि-ओषध्योः । पा०४।१।४२ वा०१,२।

४० वा नाम्नि । पा०४।१।४२ वा०३।

४१ शोणादिभ्यः । पा०४।१।४३,४५।

४२ एः अक्तिनः । काशिका ४।१।४५[२]। पा०४।१।४५।

४३ ओः गुणाद् अखरु-संयोगोपान्तात् । पा०४।१।४४+वा०२।

४४ पुंनाम्नो योगाद् अपालकान्तात् । पा०४।१।४८+भा०।

४५ पूतक्रतु-वृषाकपि-अग्नि-कुसित-कुसीदानाम् ऐ च । पा०४।१।३६,३७।

४६ मनोः औ वा । पा०४।१।३८।

४७ सूर्या देवी । पा०४।१।४८ भा०।

४८ इन्द्र-वरुण-भव-शर्व-रुद्र-मृडानाम् आनुक् च । पा०४।१।४९।

४९ आचार्यानी । पा०४।१।४९ वा०६।

५० मातुल-उपाध्यायाद् वा । पा०४।१।४९ वा०४।

५१ आर्य-क्षत्रियाच्च पा०४।१।४९।वा०७।

५२ हिम-अरण्याद् महत्त्वे । पा०४।१।४९ वा०१।

५३ यवाद् दोषे । पा०४।१।४९ वा०२।

५४ यवनात् लिप्याम् । पा०४।१।४९ वा०३।

५५ क्रीतात् करणादेः । पा०४।१।५०।

५६ क्ताद् अल्पोक्तौ । पा०४।१।५१।

५७ स्वाङ्गात् अक्त-मित-जात-प्रतिपन्नात् अन्यार्थे । पा०४।१।५४। पा०६।२।१७०।पा०४।१।५२ वा०१।

५८ पाणिगृहीती ऊढा । पा०।४।१।५२ वा०२।

५९ जातेः अनाच्छादाद् वा । पा०४।१।५३। पा०६।२।१७०।

६० संज्ञायाम् । पा०४।१।५२। वा०३,४।

६१ स्वाङ्गाद् अप्रधानात् ।पा०४।१।५४।

६२ नासिका-उदर-ओष्ठ-जङ्घा-दन्त-कर्ण-शृङ्ग-अङ्ग-गात्र-कण्ठात् । पा० ४।१।५५। काशिका ४।१।५४।

---

१ अस्य सूत्रस्य वृत्तौ "भाषायामपीष्यते" इति निर्दिश्य 'असिक्नी-पलिक्नी' रूपसिद्धिर्दर्शिता ।

२ अत्रापि काशिकायाम् अस्मिन् सूत्रे 'कृदिकारात् अक्तिनः' इति वार्तिकम् ।

६३ पुच्छात् । पा०४।१।५५ वा०१।
६४ कवर-मणि-विष-शरात् । पा०४।१।५५ वा०२।
६५ उपमानादेः । पा०४।१।५५ वा०३।
६६ पक्षात् । पा०४।१।५५ वा०३।
६७ न क्रोडादिभ्यः । पा०४।१।५६।
६८ सह-नञ्-विद्यमानादेः । पा०४।१।५७।
६९ नख-मुखाद् नाम्नि । पा०४।१।५८।
७० सखी अशिश्वी । पा०४।१।६२।
७१ जातेः अस्त्रीविषयाद् अयोपान्तात् । पा०४।१।६३।
७२ पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वालान्तात् । पा०४।१।६४।
७३ इतः नृजातेः । पा०४।१।६५।
७४ इञः । पा०४।१।६५ वा०१।
७५ ऊङ् उतः । पा०४।१।६६।
७६ अप्राणिनाम् अरज्ज्वादिभ्यः । पा०४।१।६६ वा०१।
७७ बाह्वन्त-कद्रु-कमण्डलुभ्यो नाम्नि । पा०४।१।६७,७२।
७८ पङ्गूः श्वश्रूः । पा०४।१।६८। काशिका ४।१।६८।
७९ ऊरोः उपमा-संहित-सहित-सह-शफ-वाम-लक्ष्मणादेः । पा०४।१।६९,७०। ७० भा०।
८० यङश्चाप् । पा०४।१।७४।
८१ यूनस्तिः । पा०४।१।७७।
८२ अनृषेर्गुरूपोत्तमाद् गोत्रे अणिञोः ष्यङ् । पा०४।१।७८।
८३ कुलनाम्नः । पा०४।१।७९।
८४ क्रौड्यादीनाम् । पा०४।१।८०।
८५ दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्ठेविद्धीनां वा । पा०४।१।८१।

[ द्वितीयस्य अध्यायस्य तृतीयः पादः समाप्तः ]

## [ चतुर्थः पादः ]

१ प्राग्जिताद् अण् । पा०४।१।८३।
२ दिति-अदिति-आदित्य-यमाद् ण्यः । पा०४।१।८५। काशिका ४।१।८५।
३ पत्युरनश्वाद्यादेः । पा०४।१।८५,८४।
४ अः स्थाम्नः । पा०४।१।८५ वा०७।
५ लोम्नः अपत्येषु । पा०४।१।८५ वा०८।
६ पृथिव्या ञः । पा०४।१।८५ वा०२।
७ उत्सादिभ्यः अञ् । पा०४।१।८६।
८ देवात् । पा०४।१।८५ वा०३।
९ यञ् । पा०४।१।८५। वा०३।
१० बहिषः टीकक् च । पा०४।१।८५ वा०५,४।
११ संख्यादेः संख्येयाद् अनपत्ये अजादेर्लुग् अद्विः । पा०४।१।८८+भा०।
१२ प्राग् वतेः अग्नि-कलिभ्यां ढक् । पा०४।२।७ भा०।
१३ स्त्री-पुंसाभ्यां नञ्-स्नञौ । पा०४।१।८७+वा०१।
१४ भावे वा । पा०४।१।८७ वा०२।
१५ गोः अचि यत् । पा०४।१।८५ वा०९।
१६ तस्य अपत्यम् । पा०४।१।९२।

१७ आद्यात् । पा०४।१।६३।
१८ पौत्रादेः अस्त्रियां गुर्वयित्ते । पा०४।१।६४।
१९ अतः इञ् । पा०४।१।६५।
२० वाह्वादिभ्यो गोत्रादिभ्यः । पा०४।१।६६ वा०१।
२१ व्यासादीनाम् अकङ् च । पा०४।१।६७ भा०।
२२ विदादिभ्यः अञ् । पा०४।१।१०४।
२३ ऋषेः पौत्रादौ । पा०४।१।१०४।
२४ गर्गादिभ्यो यञ् । पा०४।१।१०५।
२५ मधोर्ब्राह्मणे । पा०४।१।१०६।
२६ बभ्रोः कौशिके । पा०४।१।१०६।
२७ कपेः आङ्गिरसे । पा०४।१।१०७।
२८ वोधात् । पा०४।१।१०७।
२९ वतण्डात् । पा०४।१।१०८।
३० स्त्रियां लुक् । पा०४।१।१०९।
३१ अश्वादिभ्यः फञ् । पा०४।१।११०।
३२ भर्गात् त्रैगर्ते । पा०४।१।१११।
३३ कुञ्जादिभ्यः फ्यञ् । पा०४।१।१८ भा०।
३४ स्त्रीबहुषु फक् । पा०५।३।११३। पा०४।१।६८ भा०।
३५ नडादिभ्यः । पा०४।१।९९।
३६ हरितादिभ्यः अञः । पा०४।१।१००।
३७ यञिञः । पा०४।१।१०१।
३८ शरद्वत्-शुनक-दर्भाद् भार्गव-वात्स्य-आग्रायणेषु । पा०४।१।१०२।
३९ पर्यत-जीवन्ताद् वा । पा०४।१।१०३।
४० द्रोणात् । पा०४।१।१०३।
४१ शिवादिभ्यः अण् । पा०४।१।११२।
४२ नदी-मानुषीनाम्नः अनादैजाद्यचः । पा०४।१।११३।
४३ कुब्जा-कोकिलाभ्याम् । पा०४।१।१२० भा०।
४४ ऋषि-कुरु-वृष्णि-अन्धकात् । पा०४।१।११४।
४५ मातुः उत् संख्या-सं-भद्रादेः । पा०४।१।११५।
४६ कन्यायाः कनीन च । पा०४।१।११६।
४७ शुङ्ग-च्छगल-विकर्णाद् भारद्वाज-वात्स्य-आत्रेयेषु । पा०४।१।११७।
४८ पीला-मण्डूकाद् वा । पा०४।१।११८,११९।
४९ ढक् । पा०४।१।११९।
५० ङी-आप्-ति-ऊङः । पा०४।१।१२०।
५१ द्व्यचः । पा०४।१।१२१।
५२ इतोऽनिञः । पा०४।१।१२२।
५३ शुभ्रादिभ्यः । पा०४।१।१२३।
५४ विकर्ण-कुषीतकात् काश्यपे । पा०४।१।१२४।
५५ भ्रौवेयः । पा०४।१।१२५।
५६ कल्याण्यादीनाम् इनङ् । पा०४।१।१२६।
५७ कुलटाया वा । पा०४।१।१२७।
५८ चटकात् ऐरक् । पा०४।१।१२८+वा०१।
५९ लुक् स्त्रियाम् । पा०४।१।१२८ वा०२।
६० जाण्ड-पाण्डाद् आरक् । पा०४।१।१३० भा०।
६१ गोधायाः । पा०४।१।१३०।
६२ एरक् । पा०४।१।१२९।
६३ क्षुद्राभ्यो वा । पा०४।१।१३१।

६४ भ्रातुर्व्यत् । पा०४।१।१४४।
६५ छः । पा०४।१।१४४।
६६ स्वसुः । पा०४।१।१४३।
६७ पितृ-मात्रादेः छण् ।
पा०४।१।१३२,१३४।
६८ ढकि लोपः । पा०४।१।१३३।
६९ क्षत्रात् जातौ घः । पा०४।१।१३८।
काशिका ४।१।१३८।
७० राज्ञो यत् । पा०४।१।१३७+वा०१।
७१ श्वशुरात् । पा०४।१।१३७।
७२ कुलात् ढकञ् च । पा०४।१।१४०।
७३ खः पदान्ताच्च । पा०४।१।१३९ ।
७४ दुरः ढक् वा । पा०४।१।१४२।
७५ महाकुलाद् अञ्-खञौ ।
पा०४।१।१४१।
७६ चतुष्पाद्भ्यो ढञ् । पा०४।१।१३५।
७७ गृष्ट्यादिभ्यः । पा०४।१।१३६।
७८ रेवत्यादिभ्यः ठक् । पा०४।१।१४६।
७९ पौत्रादेः स्त्रियाः कुत्सिते ण च ।
पा०४।१।१४७।
८० सौवीरेषु वा । पा०४।१।१४८।
८१ फेश्छ च । पा०४।१।१४९।
८२ फाण्टाहृतेःण-फिञौ।पा०४।१।१५०।
८३ मिमतात् । पा०४।१।१५०।
८४ कुर्वादिभ्यो ण्यः । पा०४।१।१५१।
८५ सेनान्त-कारु-लक्ष्मणाद् इञ् च ।
पा०४।१।१५२,१५३।
८६ तिकादिभ्यः फिञ् । पा०४।१।१५४।
८७ दगु-कोशल-कर्मार-च्छाग-वृषाद्
युट् च । पा०४।१।१५५ वा०१।
८८ द्व्यचोऽणः । पा०४।१।१५६।
८९ त्यदादिभ्यो वा ।
काशिका ४।१।१५६[1]।
९० अगोत्रादादैजाद्यचः। पा०४।१।१५७।
९१ वाकिनादीनां कुक् च ।
पा०४।१।१५८।
९२ पुत्रान्ताद् वा । पा०४।१।१५९।
९३ फिन् बहुलम् । पा०४।१।१६०।
९४ मनोर्जातौ यत् सुक् च ।
पा०४।१।१६१।
९५ अञ् । पा०४।१।१६१।
९६ जनपदनाम्नः क्षत्रियाद् राज्ञि च ।
पा०४।१।१६८+वा०३।
९७ गान्धारि-शाल्वेयात् ।
पा०४।१।१६९।
९८ आदैजाद्यचो ञ्यङ । पा०४।१।१७१।
९९ इत् कोशल-आजादात् ।
पा०४।१।१७१।
१०० द्व्यच्-मगध-कलिङ्ग-शूरमसाद्[2]
अण् । पा०४।१।१७०।
१०१ कुरु-नादिभ्यः ण्यः ।
पा०४।१।१७२।
१०२ पाण्डोर्ड्यण् । पा०४।१।१६८ भा०।
१०३ शाल्वाङ्ग-प्रत्यग्रथ-कलकूट-
अश्मकात् इञ् । पा०४।१।१७३।
१०४ कम्बोजादिभ्यो लुक् ।
पा०४।१।१७५+वा०१।
१०५ स्त्रियां कुरु-कुन्ति-अवन्तिभ्यः ।
पा०४।१।१७६।
१०६ अतः अप्राच्य-भर्गादिभ्यः ।
पा०४।१।१७७,१७८।

---

१. अत्र सूत्रे "त्यदादीनां वा फिञ् वक्तव्यः" इति वार्तिकम् ।
२. अत्र सवृत्तिके चान्द्रव्याकरणे 'सूरमसाद्' इति पाठः।

१०७ यञ्-अञोः बहुषु अस्त्रियाम् ।
पा०२।४।६४,६२।

१०८ कुण्डिनाः । पा०२।४।७०।

१०९ त्र्यादीनाम् । पा०४।१।१७४।
पा०२।४।६२।

११० यस्कादिभ्यः । पा०२।४।६३।

१११ अत्रि-भृगु-कुत्स-वसिष्ठ-अङ्गिरस्-
गोतमात् । पा०२।४।६५।

११२ अगस्तयः । पा०२।४।७०।

११३ बह्वचः प्राच्याद् इञः ।
पा०२।४।६६।

११४ उपकादिभ्यो वा । पा०२।४।६९।

११५ तिक-कितवादिभ्यश्च अर्थैकार्थ्ये ।
पा०२।४।६८।

११६ न गोपवनादिभ्यः अष्टभ्यः ।
पा०२।४।६७+वा०१।

११७ प्राग्जितीये अचि । पा०४।१।८९।

११८ गोत्राद् लुक् । पा०४।१।९०।

११९ फक्-फिञोर्वा । पा०४।१।९१।

१२० अब्राह्मणात् । पा०२।४ ५८ भा०।

१२१ पैलादिभ्यः । पा०२।४।५९।

१२२ प्राच्याद् इञः अतौल्वलिभ्यः ।
पा०२।४।६०,६१।

१२३ ञिद्-आर्षण्याद् अणिञोः ।
पा०२।४।५८।

[द्वितीयस्य अध्यायस्य चतुर्थः पादः समाप्तः]

[चान्द्रे व्याकरणे द्वितीयः अध्यायः समाप्तः]

# [तृतीयः अध्यायः, प्रथमः पादः]

१ तेन रक्तं रागात् । पा०४।२।१।

२ लाक्षा-रोचनात् ठक् । पा०४।२।२।

३ शकल-कर्दमाद् वा । पा०४।२।२ वा०१।

४ नील-पीताद् अन्-कनौ । पा०४।२।२ वा०२,३।

५ नक्षत्रैरिन्दुयुक्तैः कालः । पा०४।२।३+वा०१।

६ चार्थात् छः । पा०४।२।६।

७ दृष्टं साम डित् वा । पा०४।२।७+भा०।

८ गोत्रात् अङ्कवत् । पा०४।२।७ भा०।

९ वामदेव्यम् । पा०४।२।९।

१० परिवृतो रथः । पा०४।२।१०।

११ कौमारी प्राथम्ये । पा०४।२।१३।

१२ तत्र उद्धृतं पात्रेभ्यः । पा०४।२।१४।

१३ स्थण्डिले शेते व्रती । पा०४।२।१५।

१४ संस्कृतं भक्ष्यम् । पा०४।२।१६।

१५ शूल-उखात् यत् । पा०४।२।१७।

१६ दध्नः ठक् । पा०४।२।१८।

१७ क्षीरात् ढञ् । पा०४।२।२०।

१८ साऽस्य पौर्णमासी । पा०४।२।२१।

१९ आग्रहायणी-अश्वत्थात् ठक् । पा०४।२।२२।

२० फाल्गुनी-श्रवणा-कार्तिकी-चैत्रीभ्यो वा । पा०४।२।२३।

२१ देवता । पा०४।२।२४।

२२ कस्य इत् । पा०४।२।२५।

२३ शुक्रात् घन् । पा०४।२।२६।

२४ पैङ्गाक्षीपुत्रादिभ्यः छः । पा०४।२।२८ वा०१।

२५ शतरुद्रात् घश्च । पा०४।२।२८ वा०२।

२६ अपोनपात्-अपांनपातोः तृ चातः । पा०४।२।२७,२८।

२७ महेन्द्राद् वा । पा०४।२।२९।

२८ सोमात् ट्यण् । पा०४।२।३०।

२९ वायु-ऋतु-पितृ-उषसो यत् । पा०४।२।३१।

३० द्यावापृथिवी-शुनासीर-मरुत्वत्-अग्नीषोम-वास्तोष्पति-गृहमेधात् छश्च । पा०४।२।३२।

३१ कालेभ्यो भववत् । पा०४।२।३४।

३२ महाराज-प्रोष्ठपदात् ठञ् । पा०४।२।३५।

३३ आदेश्छन्दसः प्रगाथे । पा०४।२।५५।

३४ योद्धृप्रयोजनात् संग्रामे । पा०४।२।५६।

३५ प्रहरणात् अस्यां क्रीडायां णः । पा०४।२।५७।

३६ भावघञो ञः । पा०४।२।५८।

३७ तद् अधीते तद् वेद । पा०४।२।५९।

३८ क्रतु-उक्थादिभ्यः ठक् । पा०४।२।६०।

३९ शत-षष्टेः पथः ष्ठन् । पा०४।२।६०। भा० (कारिका[1])

४० क्रमादिभ्यो वुन् । पा०४।२।६१।

४१ प्रोक्तात् लुक् । पा०४।२।६४।

---

१ इयं च कारिका श्रीकिल्हॉर्नमहाशयसंपादिते व्याकरणमहाभाष्ये एवं पठ्यते— "अनुसूर्लक्ष्यलक्षणे सर्वसादेर्द्विगोश्च लः । इकन् पदोत्तरपदात् शत-षष्टेः षिकन् पथः" ॥ —द्वितीय भागे पृ० २८४ । काशिकायां तु ४।२।६० सूत्रे इदं वार्तिकम्— "शत-षष्टेः षिकन् पथो बहुलम्" ।

४२ सूत्रात् संख्याकात् । पा०४।२।६५+भा०।

४३ तस्य समूहः । पा०४।२।३७।

४४ भिक्षादिभ्यः अण् । पा०४।२।३८।

४५ गोत्र-उक्ष-उष्ट्र-उरभ्र-राज-राजपुत्र-वत्स-अज-वृद्धात् वुञ् । पा०४।२।३९+भा०।

४६ केदारात् यञ् च । पा०४।२।४०।

४७ कवचिनश्च ठक् । पा०४।२।४१।

४८ हस्ति-अचित्तात् । पा०४।२।४७।

४९ धेनोरनञः । पा०४।२।४५ भा० । काशिका ४।२।४७ वा०।

५० गणिका-ब्राह्मण-माणव-वाडवात् यञ् । पा०४।२।४० भा०। पा०४।२।४२।

५१ केशाद् वा । पा० ४।२।४८।

५२ अश्वात् छः । पा०४।२।४८।

५३ पार्श्व-पौरुषेये । पा०४।२।४३ वा०३। पा०५।१।१० भा०।

५४ पृष्ठ्य-अहीनौ क्रतौ । पा०४।२।४२ वा०१। पा०४।२।४३ वा०१,२।

५५ वातात् ऊलः । पा०५।२।१२२ वा०९।

५६ पाशादिभ्यः यः । पा०४।२।४९।

५७ खलादिभ्यः इनिः । पा०४।२।५१ वा०१।

५८ गोत्रा । पा०४।२।५१।

५९ ग्राम-जन-गज-बन्धु-सहायात् तल् । पा०४।२।४३+भा०।

६० पितृव्य-मातामह-पितामहाः । पा०४।२।३६।

६१ विषये देशे । पा०४।२।५२।

६२ राजन्यादिभ्यः वुञ् । पा०४।२।५३।

६३ भौरिकि-ऐषुकार्यादिभ्यः विधल्-भक्तलौ । पा०४।२।५४।

६४ निवासे तन्नाम्नि । पा०४।२।६९,६७।

६५ अदूरभवे । पा०४।२।७०।

६६ तेन निर्वृत्ते । पा०४।२।६८।

६७ तद् इह अस्ति च । पा०४।२।६७।

६८ वुञ्-छण्-क-ठच्-इल-स-इनि-र-ढञ्--ण्य-य-फक्-फिञ्-इञ्-ञ्य--कक्-ठक्-छ-कीय-ड्मतुप्-ड्वलचः । पा०४।२।८०,९०,९१,८७,८८।

[ तृतीयस्य अध्यायस्य प्रथमः पादः समाप्तः ]

# [ द्वितीयः पादः ]

१ शेषे । पा०४।२।९२।

२ राष्ट्राद् घः । पा०४।२।९३।

३ परावार-अवारपारात् खः । पा०४।२।९३वा०१,२।

४ ग्रामात् य-खञौ । पा०४।२।९४।

५ कत्र्यादिभ्यश्च ढकञ् । पा०४।२।९५+भा०।

६ नद्यादिभ्यः ढक् । पा०४।२।९७।

७ दक्षिणा-पश्चात्-पुरसः त्यक् । पा०४।२।९८।

८ बह्लि-उर्दि-पर्दि-कापिशीभ्यः ष्फक् । पा०४।२।९९+भा०।

९ रङ्कोः प्राणिनि वा । पा०४।२।१००। काशिका ४।२।१००।

१० द्यु-प्राग्-अपाग्-उदक्-प्रतीचो यत् । पा०४।२।१०१

११ कन्थायाः ठक् । पा०४।२।१०२।

१२ वर्णौ वुक् । पा०४।२।१०३।

१३ क्व-अमा-इह-त्र-तसः त्यप् । पा०४।२।१०४ भा०।

१४ निसो गते । पा०४।२।१०४ भा०।

१५ ऐषमस्-ह्यस्-श्वसो वा । पा०४।२।१०५।

१६ दूरेत्य-औत्तराहौ । पा०४।२।१०४ भा०।

१७ णः अरण्यात् । पा०४।२।१०४ भा०।

१८ रूप्यान्तात् ञः । पा०४।२।१०६।

१९ दिगादेरनाम्नि अमद्रात् । पा०४।२।१०७,१०८।

२० बाहीकादिभ्यः अण् । पा०४।२।११०।

२१ शकलादिभ्यः गोत्रात् । पा०४।२।१११।

२२ इञः । पा०४।२।११२।

२३ न द्व्यचः प्राच्यात् । पा०४।२।११३।

२४ आदैजाद्यचश्छः । पा०४।२।११४।

२५ एङाद्यचः प्राग्देशात् । पा०१।१।७५।

२६ नृनाम्नो वा । पा०१।१।७३ वा०५।

२७ गोत्रान्तात् तद्वद् अजिह्वाकात्य-हरितकात्यात् । पा०१।१।७३ वा०७,८।

२८ त्यदादिभ्यः । पा०१।१।७४।

२९ भवतो दश्च । पा०४।२।११५। पा०१।४।१६।

३० ठञ् । पा०४।२।११५।

३१ ओः देशात् । पा०४।२।११९।

३२ प्राच्यात् छे । पा०४।२।१२०।

३३ काश्यादिभ्यः ञिकश्च । पा०४।२।११६।

३४ बाहीकग्रामात् । पा०४।२।११७।

३५ वा उशीनरेषु । पा०४।२।११८।

३६ प्रस्थ-वह-पुरान्त-योपान्त-धन्वार्थात् वुञ् । पा०४।२।१२२,१२१।

३७ रोपान्त-ईतः प्राच्यात् । पा०४।२।१२३।

३८ जनपदेभ्यः । पा०४।२।१२४।

३९ बहुत्वविषयेभ्यः । पा०४।२।१२५।

४० कच्छ-अग्नि-वक्त्र-वर्तान्तात्[1]। पा०४।२।१२६।

४१ धूमादिभ्यः । पा०४।२।१२७।

४२ नगरात् कुत्सा-प्रावीण्ययोः । पा०४।२।१२८।

४३ अरण्यात् पथि-न्याय-अध्याय-हस्ति-नर-विहारेषु । पा०४।२।१२९+भा०।

४४ वा गोमये । पा०४।२।१२९ भा०।

४५ कुरु-युगन्धरात् । पा०४।२।१३०।

४६ वृजि-मद्रात् कन् । पा०४।२।१३१।

४७ कोपान्ताद् अण् । पा०४।२।१३२।

४८ कच्छादिभ्यः । पा०४।२।१३३।

४९ नृ-तत्स्थयोर्वुञ् । पा०४।२।१३४।

५० शाल्वाद् गो-यवाग्वोः । पा०४।२।१३६।

५१ न पदातौ । पा०४।२।१३५।

५२ गर्तान्तात् छः । पा०४।२।१३७।

५३ कटादेः प्राच्यात् । पा०४।२।१३९।

५४ क-खोपान्त-कन्था-पलद-नगर-ग्राम-ह्रदान्तात् छे । पा०४।२।१४१,१४२।

५५ पर्वतात् । पा०४।२।१४३।

५६ अनरे वा । पा०४।२।१४४।

५७ कृकण-पर्णाद् भारद्वाजात् । पा०४।२।१४५।

५८ गहादिभ्यः । पा०४।२।१३८।

---

१ पाणिनीये तु–'वक्त्र-गर्तोत्तरपदात्' इति पाठः। उदाहरणमपि-चाक्रगर्तकः।

५९ पृथिवीमध्यस्य मध्यमश्च ।
पा०४।२।१३८ वा०१।

६० निवासस्य चरणे अण् च ।
पा०४।२।१३८ वा०२।

६१ वेणुकादिभ्यः छण् ।
काशिका ४।२।१३८[1]।

६२ युष्मद्-अस्मदोः खञ् युष्माक-अस्माकौ च । पा०४।३।१,२।

६३ अण् । पा०।४।३।१।

६४ तवक-ममकौ एकत्वे। पा०४।३।३।

६५ द्वीपादनुसमुद्रात् ञ्यः। पा०४।३।१०।

६६ अर्धात् यत् । पा०४।३।४।

६७ पर-अवर-अधम-उत्तमादेः ।
पा०४।३।५।

६८ दिगादेः ठञ् च । पा०४।३।६।

६९ ग्राम-जनपदांशात् अण् च ।
पा०४।३।७।

७० सपूर्वात् । पा०४।३।४। वा०१।

७१ कालेभ्यः । पा०४।३।११।

७२ शरदः श्राद्धे । पा०४।३।१२।

७३ रोग-आतपयोः वा । पा०४।३।१३।

७४ निशा-प्रदोषात् । पा०४।३।१४।

७५ श्वसः तुट् च । पा०४।३।१५।

७६ प्राह्णे-प्रगे-सायं-चिरम्-असंख्यात् टच्युः।
पा०४।३।२३।

७७ पूर्वाण्ह-अपराण्हात् वा ।
पा०४।३।२४।

७८ परुत्-परारि-चिरात् त्नः ।
पा०४।३।२३। भा०।

७९ सन्ध्यादि-ऋतु-नक्षत्रात् अण् ।
पा०४।३।१६।

८० हेमन्ताद् वा तलोपश्च ।
पा०४।३।२१,२२।

८१ वर्षा-प्रावृड्भ्यां ठक्-एण्यौ ।
पा०४।३।१८,१७।

८२ मध्य–आदिभ्यां मः ।पा०४।३।८।
काशिका ४।३।८ वा०।

८३ अग्र-अन्त-पश्चाद् इमच् ।
पा०४।३।२३ भा०।

[तृतीयस्य अध्यायस्य द्वितीयः पादः समाप्तः]

## [तृतीयः पादः]

१ तत्र जाते प्रावृषः ठप् ।
पा०४।३।२५,२६।

२ पूर्वाह्ण-अवराह्ण-आर्द्रा-मूल-प्रदोष-अवस्करात् कन् नाम्नि ।
पा०४।३।२८,२७।

३ पन्थकः । पा०४।३।२९।

४ सिन्धु-अपकरात् वा ।
पा०४।३।३२,३३।

५ अमावस्यार्थात् अश्च ।
पा०४।३।३०,३१।
तथा काशिका ४।३।३०,३१।

६ स्थानान्त-गोशाल-खरशालात् लुक् ।
पा०४।३।३५।

---

१ काशिकायाम् अस्मिन् सूत्रे "वेणुकादिभ्यः छण् वक्तव्यः," इति वार्तिकनिर्देशे अस्य चान्द्रसूत्रस्य समावेशः ।

७ वत्स-शाल-नक्षत्रेभ्यः बहुलम् । पा०४।३।३६,३७।

८ डिदण् । पा०४।२,७ भा०।

९ श्रविष्ठा-आषाढात् छण् । पा०४।३।३४ वा०३।

१० फल्गुन्याः टः। पा०४।३।३४ वा०२।

११ आश्वयुज्याम् उप्ते वुञ् । पा०४।३।४५,४४।

१२ ग्रीष्म-वसन्ताद् वा । पा०४।३।४६।

१३ कालाद् देयम् ऋणम् । पा०४।३।४७,४३।

१४ कलापि-अश्वत्थ-यवबुसाद् वुन् । पा०४।३।४८।

१५ ग्रीष्म-अवरसमात् वुञ् । पा०४।३।४९।

१६ संवत्सर-आग्रहायण्याः ठञ् च । पा०४।३।५०।

१७ दिगादिभ्यः भवे यत् । पा०४।३।५४,५३।

१८ देहांशात् । पा०४।३।५५।

१९ दृति-कुक्षि-कलशि-वस्ति-अस्ति-अहेः ढञ् । पा०४।३।५६।

२० ग्रीवातः अण् च । पा०४।३।५७।

२१ गम्भीर-पञ्चजनात् ञ्यः । पा०४।३।५८,६० भा०।

२२ चातुर्मास्यं यज्ञे । पा०५।१।९४ वा०६।

२३ परिमुखादिभ्यः । पा०४।३।५८ वा०१।

२४ अन्तःपूर्वात् तदर्थात् ठञ् । पा०४।३।६०।

२५ परि-अनुभ्यां ग्रामात् । पा०४।३।६१।

२६ समानात् । पा०४।३।६० भा०।

२७ तदादेः । पा०४।३।६० भा०।

२८ लोकान्तात् । पा०४।३।६० भा०।

२९ अध्यात्मादिभ्यः। पा०४।३।६० भा०।

३० जिह्वामूल-अङ्गुलेः छः । पा०४।३।६२।

३१ वर्गान्तात् । पा०४।३।६३।

३२ अशब्दे यत्-खौ च । पा०४।३।६४।

३३ मध्यात् मण्-मीयौ च । पा०४।३।६० भा०।

३४ ललाटात् भूषणे कन् । पा०४।३।६५।

३५ कर्णात् । पा०४।३।६५।

३६ उपादेः ठक् । पा०४।३।४०।

३७ जानु-नीवीभ्याम् । पा०४।३।४०।

३८ तस्य व्याख्याने च व्याख्येयनाम्नः। पा०४।३।६६।

३९ बह्वचः अन्तोदात्तात् ठञ् । पा०४।३।६७।

४० यज्ञेभ्यः । पा०४।३।६८।

४१ अध्यायेषु एव ऋषेः। पा०४।३।६९।

४२ पौरोडाश-पुरोडाशात् ष्ठन् । पा।०४।३।७०।

४३ छन्दसो यत् । पा०४।३।७१।

४४ अण् । पा०४।३।७१।

४५ ऋगयनादिभ्यः । पा०४।३।७३।

४६ द्व्यच्-ऋत्-ऋग्-ब्राह्मण-प्रथम-अध्वर-पुरश्चरण-नाम-आख्यातात् ठक् । पा०४।३।७२।

४७ आयस्थानात् आगते । पा०४।३।७५,७४।

४८ शुण्डिकादिभ्यः अण् । पा०४।३।७६।

४९ विद्या-योनिसंबन्धात् वुञ् । पा०४।३।७७।

५० ऋतः कञ् । पा०४।३।७८।
५१ पित्र्यं वा । पा०४।३।७९।
५२ नृ-हेतुभ्यो रूप्यः । पा०४।३।८१।
५३ मयट् । पा०४।३।८२।
५४ गोत्रात् अङ्कवत् । पा०४।३।८०।
५५ वैदूर्यम् । पा०४।३।८४।
५६ शिशुक्रन्दादीन् अधिकृत्य कृते ग्रन्थे छः । पा०४।३।८८,८७।
५७ चार्थान् अदेवासुरादीन् । पा०४।३।८८+वा०१।
५८ सोऽस्य अभिजनः गिरिभ्यः शस्त्रजीविषु । पा०४।३।९०,९१।
५९ शालातुरीयः । पा०४।३।९४।
६० शण्डिकादिभ्यः ञ्यः । पा०४।३।९२।
६१ सिन्ध्वादिभ्यः अण् । पा०४।३।९३।
६२ तुदी-वर्मतीभ्यां ढञ् । पा०४।३।९४।
६३ तत्र भक्तिर्महाराजात् ठक् । पा०४।३।९५,९७।
६४ अचित्तात् अदेश-कालात् । पा०४।३।९६।
६५ वासुदेव-अर्जुनात् कन् । पा०४।३।९८।
६६ गोत्रात् बहुलं वुञ् । पा०४।३।९९।
६७ क्षत्रियात् । पा०४।३।९९।
६८ जनपदवत् सर्वं तत्सरूपात् बहुत्वे । पा०४।३।१००।
६९ तेन प्रोक्तं वेदं वेत्ति अधीते । पा०४।३।१०१। पा०४।२।६६।
७० तित्तिरि-वरतन्तु-खण्डिक-उखात् छण् । पा०४।३।१०२।
७१ काश्यप-कौशिकाभ्यामृषिभ्यां कल्पं च णिनिः । पा०४।३।१०३। पा०४।२।६६ वा० ६।
७२ शौनकादिभ्यः । पा०४।३।१०६।
७३ कलापि-वैशम्पायनशिष्येभ्यः । पा०४।३।१०४।
७४ कठ-चरकात् लुक् । पा०४।३।१०७।
७५ कलापिनः अण् । पा०४।३।१०८।
७६ छगलिनः ढिनुक् । पा०४।३।१०९।
७७ कर्मन्द-कृशाश्वाभ्यां भिक्षु-नटसूत्रम् इनिः । पा०४।३।१११।
७८ पाराशर्य-शिलालिभ्यां णिनिः । पा०४।३।११०।
७९ पुराणर्षेर्ब्राह्मणम् । पा०४।३।१०५।
८० कल्पे । पा०४।३।१०५।
८१ अथर्वणः अण् वेदे । पा०४।३।१३३वा०२।
८२ पुरुषात् कृते ढञ् । पा०५।१।१०भा०।
८३ संज्ञायां वातपात् अञ् । पा०४।३।११७,११९।
८४ कुलालादिभ्यः वुञ् । पा०४।३।११८।
८५ तस्य स्वं रथात् यत् । पा०४।३।१२०,१२१।
८६ यानादेः अञ् । पा०४।३।१२२।
८७ यानात् पा०४।३।१२३।
८८ हल-सीरात् ठक् । पा०४।३।१२४।
८९ चार्थाद् वैरे वुन् अदेवासुरादिभ्यः । पा०४।३।१२५+वा०१।
९० विवाहे । पा०४।३।१२५।
९१ नटात् ञ्यः नृत्ये । पा०४।३।१२९।
९२ छन्दोग-औक्थिक-याज्ञिक-बह्वृचात् धर्म-आम्नाय-संघेषु । पा०४।३।१२९,१२० वा०११।
९३ आथर्वणः । पा०४।३।१३३वा०२।
९४ चरणात् वुञ् । पा०४।३।१२६।

९५ गोत्रात् अदण्डमाणव-अन्तेवासिषु
पा०४।३।१२६,१३०।

९६ रैवतिकादिभ्यः छः । पा०४।३।१३१।

९७ कौपिञ्जल-हास्तिपदात् अण् ।
पा०४।३।१३१ वा०१।

९८ संघ-अङ्क-घोष-लक्षणेषु अञ् यञिञः।
पा०४।३।१२७+वा०१।

९९ शाकलात् वा । पा०४।३।१२८।

१०० वहेः तुः इट् च ।
पा०४।३।१२० वा०८।

१०१ आग्नीध्रं शरणे ।
पा०४।३।१२० वा०९।

१०२ समिधः आधाने षेण्यण् ।
पा०४।३।१२० वा०१०।

१०३ विकारे । पा०४।३।१३४।

१०४ वृक्ष-ओषधिभ्यः अंशे च ।
पा०४।३।१३५।

१०५ प्राणिभ्यः अञ् ।
पा०४।३।१५४,१३५ ।

१०६ तालादिभ्यःअण्। पा० ४।३।१५२।

१०७ हेमार्थात् परिमाणे ।
पा०४।३।१५३।

१०८ त्रपु-जतुनोः षुक् । पा०४।३।१३८।

१०९ मयट् अभक्ष-आच्छादने ।
पा०४।३।१४३।

११० एकाचः । काशिका ४।३।१४४[1]।

१११ छे । पा०४।३।१४४।

११२ व्रीहेः पुरोडाशे । पा०४।३।१४८।

११३ तिल-यव-पिष्टात् असंज्ञायाम् ।
पा०४।३।१४९,१४६।

११४ शरादिभ्यः । पा०४।३।१४४।

११५ क्रीतवत् परिमाणात् ।
पा०४।३।१५६।

११६ शम्याः ष्लञ् । पा०४।३।१४२।

११७ उष्ट्रात् वुञ् । पा०४।३।१५७।

११८ उमा-ऊर्णात् वा । पा०४।३।१५८।

११९ एणी-कोशात् ढञ् ।
पा०४।३।१५९। पा०४।३।४२ वा०१।

१२० पुरुषाद् वधे च । पा०५।१।१० वा०२।

१२१ हैयंगवीनं संज्ञायाम् ।
पा०५।२।२३+वा०१।

१२२ पयसः यत् । पा०४।३।१६० ।

१२३ आप्यं वा० । पा०४।३।१४४[2]।

१२४ द्रोः । पा०४।३।१६१।

१२५ माने वयः । पा०४।३।१६२।

१२६ कांस्य-पारशवौ । पा०४।३।१६८।

१२७ न द्विः । पा०४।३।१५५ भा० ।

[तृतीयस्य अध्यायस्य तृतीयः पादः समाप्तः]

---

१. इदं सूत्रं त्वेवम् "नित्यं वृद्ध-शरादिभ्यः" तथापि तद्वृत्तौ "एकाचो नित्यं मयटम् इच्छन्ति तद् अनेन क्रियते" इति निर्देशेन प्रस्तुतस्य चान्द्रस्य सूत्रस्य अस्मिन् सूत्रे समावेशः।

२. अस्य सूत्रस्य वृत्तौ सिद्धान्तकौमुद्याम् एवं निर्देशः—"कथं तर्हि आप्यम् अम्मयम्? इति। तस्येदम् पा०४।३।१२०। इति अणन्तात् स्वार्थे ष्यञ्" अत्र च निदशे अस्य सूत्रस्य समावेशः।

## [चतुर्थः पादः]

१ प्राग् यतः ठक् । पा०४।४।१।

२ तेन जितं जयति दीव्यति खनति । पा०४।४।२।

३ संस्कृते । पा०४।४।३।

४ कुलत्थ-कोपान्तात् अण् । पा०४।४।४।

५ तरति । पा०४।४।५।

६ द्व्यच्-नौभ्यां ठन् । पा०४।४।७।

७ चरति । पा०४।४।८।

८ पर्पादिभ्यः ष्ठन् । पा०४।४।१०।

९ श्वगणाद् वा । पा०४।४।११।

१० वेतनादिभ्यो जीवति । पा०४।४।१२।

११ वस्न-क्रय-विक्रयात् ठन् । पा०४।४।१३।

१२ छश्च आयुधात् । पा०४।४।१४।

१३ व्रातात् खञ् । पा०५।२।२१।

१४ हरति उत्सङ्गादिभ्यः । पा०४।४।१५।

१५ भस्त्रादिभ्यः ष्ठन् । पा०४।४।१६।

१६ विवध-वीवधाद् वा । पा०४।४।१७+भा०।

१७ अण् कुटिलिकायाः । पा०४।४।१८।

१८ निर्वृत्ते अक्षद्यूतादिभ्यः । पा०४।४।१९।

१९ भावात् इमप् । पा०४।४।२०भा०।

२० त्रेः । पा०४।४।२०।

२१ अपमित्य कक् । पा०४।४।२१।

२२ संसृष्टे । पा०४।४।२२।

२३ चूर्णात् इनिः । पा०४।४।२३।

२४ लवणात् लुक् । पा०४।४।२४।

२५ मुद्गात् अण् । पा०४।४।२५।

२६ ओजस्-सहस्-अम्भसा वर्तते । पा०४।४।२७।

२७ तं प्रत्यनोः ईप-लोम-कूलात् । पा०४।४।२८।

२८ परेः मुख-पार्श्वात् । पा०४।४।२९। काशिका ४।४।२९।

२९ उञ्छति । पा०४।४।३२।

३० रक्षति । पा०४।४।३३।

३१ शब्द-दर्दरं करोति । पा०४।४।३४।

३२ पक्षि-मत्स्य-मृगान् हन्ति । पा०४।४।३५।

३३ परिपन्थं तिष्ठति च । पा०४।४।३६।

३४ माथान्त-पदवी-अनुपद-आक्रन्दं धावति । पा०४।४।३७,३८।

३५ पदान्त-प्रतिकण्ठ-अर्थ-ललामं गृह्णाति । पा०४।४।३९,४०

३६ गर्ह्ये । पा०४।४।३०भा०।

३७ वृद्धेर्वृधुषः । पा०४।४।३० वा०३।

३८ दश-एकादश-कुसीदात् ष्ठन् । पा०४।४।३१।

३९ धर्म-अधर्मं चरति । पा०४।४।४१+ वा०१ ।

४० प्रतिपथमेति ठंश्च । पा०४।४।४२।

४१ समाजार्थान् समवैति । पा०४।४।४३।

४२ परिषदः ण्यः । पा०४।४।४४।

४३ सेनाया वा । पा०४।४।४५।

४४ लालाटिक-कौक्कुटिकौ । पा०४।४।४६।

४५ परदारादीन् गच्छति । पा०४।४।१ वा०४।

## [षष्ठः अध्यायः, प्रथमः पादः]

१ मृजेः आत् । पा०७।२।११४।

२ ऋतः अचि वा । पा०७।२।११४।

३ अजागृ-णि-श्वीनां लिचि अतङि आदैच् । पा०७।२।५,१।

४ हलः अचः । पा०७।२।३।

५ न इटि । पा०७।२।४।

६ वा ऊर्णोः । पा०७।२।६।

७ हलादेः उपान्तस्य अश्वस-क्षण-ह्-म्-य्-एदितः अतः । पा०७।२।७,५।

८ वद-व्रज-ल्-रः । पा०७।२।३,२।

९ ञ्णिति । पा०७।२।११५,११६।

१० अचः । पा०७।२।११५।

११ किति च अपत्यादौ अचाम् आदेः । पा०७।२।११८,११७।

१२ देविका-शिंशपा-दीर्घसत्र-श्रेयसामात् । पा०७।३।१।

१३ केकय-मित्रयु-प्रलयानां यादेरियः । पा०७।३।२।

१४ ऐज्भाविनः य्-वः पदान्तात् प्राग् ऐच् । पा०७।३।३।

१५ द्वारादीनाम् । पा०७।३।४।

१६ न्यग्रोधस्य केवलस्य । पा०७।३।५।

१७ न व्यतिहारे । पा०७।३।६।

१८ स्वागतादीनाम् । पा०७।३।७।

१९ श्वादेरिति । पा०७।३।८।

२० पदस्य वा । पा०७।३।९।

२१ उत्तरस्य । पा०७।३।१०।

२२ अंशात् ऋतोः । पा०७।३।११।

२३ सु-सर्व-अर्धात् जनपदस्य । पा०७।३।१२।

२४ अमद्राणां दिशः । पा०७।३।१३।

२५ प्राचां ग्रामाणाम् । पा०७।३।१४।

२६ संख्यायाः संवत्सर-परिमाणस्य असंज्ञा-शाण-कुलिजस्य । पा०७।३।१५,१७। काशिका ७।३।१५,१७।

२७ वर्षस्याभाविनि । पा०७।३।१६।

२८ जाते प्रोष्ठ-भद्रात् पदस्य । पा०७।३।१८। काशिका ७।३।१८।

२९ हृद्-भग-सिन्धोः पूर्वस्य च । पा०७।३।१९।

३० अनुशतिकादीनाम् । पा० ७।३।२०।

३१ देवतानां चार्थे सूक्त-हविषोः । पा०७।३।२१। काशिका ७।३।२१।

३२ नेन्द्रस्य परस्य । पा०७।३।२२।

३३ दीर्घात् वरुणस्य । पा०७।३।२३।

३४ प्राचां नगरस्य । पा०७।३।२४।

३५ जङ्गल-धेनु-वलजस्य वा । पा०७।३।२५।

३६ अर्धात् परिमाणस्य पूर्वस्य तु वा । पा०७।३।२६।

३७ नातः । पा०७।३।२७।

३८ प्रात् वाहनस्य ढे । पा०७।३।२८।

३९ नञः शुचि-ईश्वर-क्षेत्रज्ञ-कुशल-निपुणानाम् । पा०७।३।३०।

४० हनः तः अचिण्-णलोः। पा०७।३।३२।

४१ आतो युग् अणलि । पा०७।३।३३+भा०।

४२ मः सेटः न अवमि-अमि-कम-आचम-विश्रमः । पा०७।३।३४।+भा०।

४३ जनि-वधोः । पा०७।३।३५।

४४ मेर्णलि वा । पा०७।१।६१।
४५ ऋ-री-व्ली-ह्री-क्नूयी-क्ष्मायि-आतां पुग् णौ । पा०७।३।३६।
४६ शा-छा-सा-ह्वा-व्या-वे-पां युक् । पा०७।३।३७।
४७ वः विधूनने जुक् । पा०७।३।३८।
४८ धूञ्-प्रीञोर्नुक् । पा०७।३।३७ वा०१।
४९ लियः स्नेह-विलापने वा । पा०७।३।३९।
५० लो लुक् । पा०७।३।३९।
५१ पातेः । पा०७।३।३७ वा०२।
५२ प्रयोक्तुर्भियः षुक् । पा०७।३।४०।
५३ स्फायो वः । पा०७।३।४१।
५४ शदेः अगतौ तः । पा०७।३।४२।
५५ सत्य-अर्थ-वेदानाम् आयुक् । पा०३।१।२५ वा०२।
५६ मितां ह्रस्वः । पा०६।४।९२।
५७ चिण्-णमोः दीर्घश्च । पा०६।४।९३।
५८ छादेः घे । पा०६।४।९६।
५९ प्रादौ एकस्मिन् । पा०६।४।९६।
६० इस्-मन्-त्रन्-क्विषु । पा०६।४।९७।
६१ चङि उपान्तस्य । पा०७।४।१।
६२ न अग्लोपि-शासृ-ऋदिताम् । पा०७।४।२।
६३ भ्राज-भास-भाष-दीप-जीव-मील-पीडां वा । पा०७।४।३।
६४ कणादीनाम् । पा०७।४।३ भा०।
६५ उः ऋत् । पा०७।४।७।
६६ घ्रः इत् । पा०७।४।६।
६७ स्थः । पा०७।४।५।
६८ पिबः पीप्यः । पा०७।४।४।
६९ देङः दिगि लिटि । पा०७।४।९।
७० अधातोः कीदतोऽसुप आपि । पा०७।३।४४।
७१ य-काभ्यामापः अत्यक्-त्यपो वा । पा०७।३।४६,४४ वा० ५।
७२ भस्त्रा-एषा-अजा-ज्ञा-द्वा-स्वानाम् । पा०७।३।४७+वा०२।
७३ अनुक्तपुंस्कात् आच्च । पा०७।३।४८,४९।
७४ वर्तका शकुनौ । पा०७।३।४५ वा०८।
७५ सूतका-पुत्रका-वृन्दारकाः । पा०७।३।४५ वा०१०।
७६ नरिका । पा०७।३।४४ वा०४।
७७ न यत्-तदोः । पा०७।३।४५।
७८ आशिषि । पा०७।३।४५ वा०३।
७९ क्षिपकादीनाम् । पा०७।३।४५ वा०५।
८० तारका ज्योतिषि । पा०७।३।४५ वा०६।
८१ वर्णका तान्तवे । पा०७।३।४५ वा०७।
८२ अष्टका पितृणाम् । पा०७।३।४५ वा०९।
८३ च-जोः कुः घित्-ण्यतोः । पा०७।३।५२।
८४ न्यङ्क्वादयः । पा०७।३।५३।
८५ ञ्णित्-नि हनो हः । पा०७।३।५४।
८६ द्वित्वहेतौ । पा०७।३।५५।
८७ हेः अचङि । पा०७।३।५६।
८८ सन्-लिटोः जेः । पा०७।३।५७।
८९ चेर्वा । पा०७।३।५८।
९० न क्वादेः । पा०७।३।५९।
९१ अजि-व्रजोः । पा०७।३।६०।
९२ वञ्चेर्गतौ । पा०७।३।६३।

९३ ण्ये आवश्यके । पा०७।३।६५।

९४ ऋच-रुच-याच-त्यजाम् । पा०७।३।६६+वा०३।

९५ वचः अशब्दाख्यायाम् । पा०७।३।६७।

९६ प्रयोज्य-नियोज्यौ शक्ये । पा०७।३।६८।

९७ भोज्यम् अन्ने । पा०७।३।६९।

९८ यजः बहुलम् । पा०७।३।६६,६२।

९९ ओलोपः श्ये । पा०७।३।७१।

१०० वसस्य अचि । पा०७।३।७२।

१०१ लुग् वा दुह-दिह-लिह-गुहां तङि दन्त्ये । पा०७।३।७३।

१०२ शमामष्टानां श्ये दीर्घः । पा०७।३।७४।

१०३ ष्ठिवु-क्लमु-आचमां शिति । पा०७।३।७५+वा०१।

१०४ क्रमः अतङाने । पा०७।३।७६।

१०५ इषु-गमि-यमां छः । पा०७।३।७७। काशिका ७।३।७७।

१०६ पा-घ्रा-ध्मा-स्था-म्ना-दाण्-दृश-शद-सदां पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्य-शीय-सीदाः । पा०७।३।७८।

१०७ ज्ञा-जनोः जाः । पा०७।३।७९।

१०८ प्वादीनां ह्रस्वः । पा०७।३।८०।

१०९ मिदेः एत् । पा०७।३।८२।

[षष्ठस्य अध्यायस्य प्रथमः पादः समाप्तः]

## [द्वितीयः पादः]

१ इकः अदेङ क्रियार्थायाः । पा०७।३।८४।

२ उ-श्नोः । पा०७।३।८४।

३ जुस्-पुकोः । पा०७।३।८३,८६।

४ लघोः उपान्तस्य । पा०७।३।८६।

५ सृजि-दृशोः झलि अम् । पा०६।१।५८।

६ स्पृश-मृश-कृष-तृप-दृप-सृपां वा । पा०६।१।५९।

७ द्विरुक्तस्य न अचि अलिटि । पा०७।३।८७।

८ तिङशिति अपिदाशीर्लिङि । पा०१।२।४,५।

९ जागुः अलिटि । पा०७।३।८५।

१० चिण्णल्ङित्सु । पा०७।३।८५।

११ पिङति । पा०१।१।५।

१२ अतिङि आच तल्लोपे । पा०१।१।४+वा०७।

१३ कुटादीनाम् अञ्णिति । पा०१।२।१।

१४ विजः इटि । पा०१।२।२।

१५ वा ऊर्णोः पा०१।२।३।

१६ त-तवतोः अपू-शी-स्विदि-मिदि-क्ष्विदि-धृषः । पा०१।२।१९,२२।

१७ मृषः अक्षान्तौ । पा०१।२।२०।

१८ उत्उपान्तस्य शब्वतः भाव-आरम्भयोर्वा । पा०१।२।२१+वा०१।

१९ मृड-मृद-गुध-कुष-क्लिश-वद-वस-लुच-ग्रहां क्त्वि । पा०१।२।७,२४,८।

२० ऋत-तृष-मृष-कृशां वा । पा०१।२।२४,२५।

२१ रलः हलादेः इदुतोः सनि च । पा०१।२।२६।

२२ रुद-विद-मुष-ग्रहाम् । पा०१।२।८।
२३ इकः अनिटि । पा०१।२।९।
२४ उपान्तस्य । पा०१।२।१०।
२५ लिङ्-सिचोः तङि । पा०१।२।११।
२६ उः । पा०१।२।१२।
२७ सिचि दा-धा-स्थाम् इच । पा०१।२।१७।
२८ गाङ ईत् स्ये च । पा०१।२।१।
२९ भू-सुवः अद्वेः तिङि । पा०७।३।८८+वा०१।
३० हलि पिति उतः औत् । पा०७।३।८९।
३१ वा ऊर्णोः । पा०७।३।९०।
३२ न अलि । पा०७।३।९१।
३३ तृणहः इम् । पा०७।३।९२।
३४ ब्रुव ईट् । पा०७।३।९३।
३५ यङो वा । पा०७।३।९४।
३६ अस्ति-सिचः अलः । पा०७।३।९६।
३७ रुद्भ्यः पञ्चभ्यः अट् च । पा०७।३।९८।९९।
३८ अदः । पा०७।३।१००।
३९ अतः आत् यञि । पा०७।३।१०१।
४० सुपि । पा०७।३।१०२।
४१ बहुषु झलि एत् । पा०७।३।१०३।
४२ ओसि । पा०७।३।१०४।
४३ टि च आपः । पा०७।३।१०५।
४४ संबोधने सौ । पा०७।३।१०६।
४५ अम्बार्थानाम् अडलेकानां ह्रस्वः पा०७।३।१०७+भा०।
४६ ङी-ऊङः । पा०७।३।१०७।
४७ मातुः मातच् पुत्रे श्लाघ्ये । पा०७।३।१०७ भा०।
४८ इत्-उतोः एङ । पा०७।३।१०८।
४९ जसि । पा०७।३।१०९।
५० ङिति असख्युः । पा०७।३।१११। पा०१।४।७।
५१ पत्युः समासे । पा०१।४।८।
५२ स्त्रियां वा । पा०१।४।९।
५३ ई-ऊभ्यां च आट् । पा०७।३।११२।
५४ सेयुवो वा । पा०१।४।४,६।
५५ स्त्रियाः । पा०१।४।४।
५६ याड् आपः । पा०७।३।११३।
५७ स्मैवतः स्याड् अत् च । पा०७।३।११४।
५८ द्वितीया-तृतीयात् वा । पा०७।३।११५।
५९ ङेः आम् तत्र । पा०७।३।११६,११७।
६० नियः । पा०७।३।११६।
६१ इत्-उद्भ्याम् औत् । पा०७।३।११८।
६२ एङः अत् च । पा०७।३।११९।
६३ टः अस्त्रियां ना । पा०७।३।१२०।
६४ ऋतः ङि-सुटि अत् । पा०७।३।११०।
६५ संयोगादेः लिटि । पा०७।४।१०+ वा०२।
६६ स्कृञः । पा०७।४।१० वा०१।
६७ ऋत्-ऋछ्-ऋणाम् । पा०७।४।११।
६८ ऋ-श्वि-दृशः अङि । पा०७।४।१६,१८।
६९ असु-पत-वचां थुक्-पुम्-उमः पा०७।४।१७,१९,२०।
७० के अणो ह्रस्वः । पा०७।४।१३।
७१ न कपि । पा०७।४।१४।
७२ आपः वा । पा०७।४।१५।
७३ शीङः एत् अलिटि । पा०७।४।२१।
७४ यि क्ङिति अयङः । पा०७।४।२२।
७५ प्रादिभ्य ऊहः ह्रस्वः । पा०७।४।२३।

७६ लिङि इणः । पा०७।४।२४।
७७ आशिषि दीर्घः । पा०७।४।२५।
७८ च्वि-यङ-यक्-क्येषु ।
पा०७।४।२६,२५।
७९ रीङ ऋतः ये च । पा०७।४।२७।
८० रिङ श-यग्-आशीर्लिङि ।
पा०७।४।२८।
८१ ऋ-संयोगाद्योः अत् । पा०७।४।२९।
८२ यङि । पा०७।४।३०।
८३ हनः घ्नी हिंसायाम् ।
पा०७।४।३० वा०१।
८४ ई घ्रा-ध्मोः । पा०७।४।३१।
८५ अस्य च्वौ । पा०७।४।३२।
८६ क्यचि । पा०७।४।३३।
८७ न क्षुधि अशनस्य । पा०७।४।३४।
८८ धनस्य तृष्णायाम् । पा०७।४।३४।
८९ उदन्यः । पा०७।४।३४।
९० वृष-अश्वयोः मैथुने सुक् ।
पा०७।१।५१ वा०१।
९१ असुक् च अत्तुम् ।
पा०७।१।५१ भा०।
९२ दो-सो-मा-स्याम् इत् ति किति ।
पा०७।४।४०।
९३ छो वा । पा०७।४।४१।
९४ धाञः हिः । पा०७।४।४२।
९५ हाकः त्वि । पा०७।४।४३।
९६ दो दत् । पा०७।४।४६।
९७ प्रादेः अचः तः । पा०७।४।४७।
९८ अपो भि । पा०७।४।४८।
९९ सि सः लिङतिङि । पा०७।४।४९।
१०० तास्-असोः रि च लोपः
पा०७।४।५०,५१।
१०१ ह एति । पा०७।४।५२।
१०२ क्यङि वा । पा०३।१।११ वा०१।
१०३ ओजस्-अप्सरसोः ।
पा०३।१।११ वा०२।
१०४ य्-इवर्णयोः दीधी-वेव्योः ।
पा०७।४।५३।
१०५ यण् अचि । पा०६।१।७६।
१०६ मि-मी-मा-रभ-लभ-शक-पत-पद-दा-
धाम् अचः सि सनि इस् ।
पा०७।४।५४। काशिका ७।४।५४।
१०७ राधः हिंसायाम् । पा०७।४।५४
वा०१।
१०८ ज्ञपि-आप्-ऋधाम् ईत् ।
पा०७।४।५५।
१०९ दम्भः इत् च । पा०७।४।५६।
११० अव्याप्यस्य मुचेः ओत् वा ।
पा० ७।४।५७।
१११ द्वित्वे पूर्वस्यात्र लोपः ।
पा०७।४।५८।
११२ हलः अनादेः । पा०७।४।६०।
११३ खयि खरः । पा०७।४।६१+वा०१।
११४ चर् । पा०८।४।५४।
११५ झषः जश् पा०८।४।५४,५३।
११६ कु-होः चुः । पा०७।४।६२।
११७ न कुङः यङि । पा०७।४।६३।
११८ उः अत् । पा०७।४।६६।
११९ ह्रस्वः । पा०७।४।५९।
१२० द्युति-स्वाप्योः यणः इक् ।
पा०७।४।६७।
१२१ व्ययः लिटि । पा०७।४।६८।
१२२ दीर्घः अपिति इणः । पा०७।४।६९।
१२३ अतः आदेः । पा०७।४।७०।

१२४ नुक् च अनेकहलः। पा०७।४।७१।
१२५ अश्नोतेः । पा०७।४।७२।
१२६ भुवः अत् । पा०७।४।७३।
१२७ निजां लुकि एत् । पा०७।४।७५।
१२८ ऋ-पृ-भृ-मा-हाङाम् इत् । पा०७।४।७७,७६।
१२९ सनि अतः । पा०७।४।७९।
१३० ओः पु-यण्-जि अपरे। पा०७।४।८०।
१३१ स्रु-श्रु-द्रु-प्रु-प्लु-च्यूनां वा । पा०७।४।८१।
१३२ आ-अदेङ यङि। पा०७।४।८२,८३।
१३३ नीग् वञ्च-स्रंसु-ध्वंसु-भ्रंशु-कस-पत-पद-स्कन्दाम् । पा०७।४।८४।
१३४ नमः अतः नुक् । पा०७।४।८५।
१३५ जप-जभ-दह-दश-भञ्ज-पशाम् । पा०७।४।८६।
१३६ चर-फलोः । पा०७।४।८७।
१३७ ति च उत् अतः। पा०७।४।८८,८९।
१३८ रीग् ऋत्वतः । पा०७।४।९०+ वा०१।
१३९ रुग्-रिकौ च लुकि । पा०७।४।९१।
१४० सन्वत् लघुनि णौ चङि अनग्लोपे । पा०७।४।९३।
१४१ दीर्घः लघोः । पा०७।४।९४।
१४२ स्मृ-दृ-त्वर-प्रथ-म्रद-स्तृ-स्पशाम् अत् । पा०७।४।९५।
१४३ वा वेष्टि-चेष्टयोः । पा०७।४।९६।
१४४ ईत् च गणः । पा०७।४।९७।

[षष्ठस्य अध्यायस्य द्वितीयः पादः समाप्तः]

## [तृतीयः पादः]

१ वीप्सा-आभीक्ष्ण्ययोः द्वे ।पा०८।१।४। पा०८।१।१।
२ परेः वर्जने वाक्ये वा । पा०८।१।५+ वा०१,२।
३ अधि-उपरि-अधसां सामीप्ये । पा०८।१।७।
४ वाक्यादेः आमन्त्रितस्य असूया-संमत्योः । पा०८।१।८।
५ एकस्य सुप्लुक्। पा०८।१।९+वा०३।
६ आबाधे पुंवच्च ।पा०८।१।१०+९ वा०३।
७ प्रकारे गुणस्य । पा०८।१।१२।
८ अकृच्छ्रे प्रिय-सुखयोर्वा । पा०८।१।१३।
९ व्यतिहारे सर्वादीनां सुर्बहुलम् । पा०८।१।१२ वा०११।
१० परस्य अपुंसि आम् । पा०८।१।१२ वा०१२।
११ यथास्वे यथायथम् । पा०८।१।१४।
१२ द्वन्द्वं रहस्य-मर्यादा-व्युत्क्रान्ति-यज्ञ-पात्रप्रयोगेषु । पा०८।१।१५।
१३ अत्यन्तसहचरिते लोकविज्ञाते । पा०८।१।१५ वा०१।
१४ संभ्रमे यावद्बोधम् । पा०८।१।१२ वा०५+भा०।
१५ अपादादौ पदादेकवाक्ये । पा०८।१।१६,१७,१८ वा०५।

१६ युष्मद्-अस्मदोः षष्ठी-चतुर्थी-द्वितीयान्तयोः वाम्-नौ वा । पा०८।१।२०,२६ भा०।

१७ बहुवचनस्य वस्-नसौ। पा०८।१।२१।

१८ एकवचनस्य ते-मे । पा०८।१।२२।

१९ त्वा-मौ द्वितीयायाः । पा०८।१।२३।

२० अन्वादेशे ।पा०८।१।२६ वा०१।

२१ सपूर्वात् प्रथमान्तात् वा । पा०८।१।२६।

२२ न च-वा-ह-अह-एवयोगे । पा०८।१।२४।

२३ दृश्यर्थे अनालोचने । पा०८।१।२५।

२४ आमन्त्रितं पूर्वम् असद्वत् । पा०८।१।७२।

२५ न सामान्यवचनमेकार्थे । पा०८।१।७४ भा०।

२६ बहुत्वे वा । पा०८।१।७४।

२७ पूर्वत्र असिद्धम् । पा०८।२।१।

२८ सुपि न लोपः । पा०८।२।२।

२९ न नि मुः । पा०८।२।३।

३० सिज्लोपः एकादेशे । पा०८।२।६ वा० ५।

३१ ष-ठनि क्तादेशः। पा०८।२।६ वा०७।

३२ प्लुतस्तुकि । पा०८।२।६ वा०११।

३३ श्चुटि श्चुः। पा०८।२।६ वा०१२।

३४ द्वित्वे परसवर्णः । पा०८।२।६ वा०१४।

३५ मात् उपान्ताच्च मतोर्वः। पा०८।२।९।

३६ झयः । पा०८।२।१०।

३७ नाम्नि । पा०८।२।११।

३८ न यवादिभ्यः । पा०८।२।९।

३९ अष्ठीवत्-चक्रीवत्-कक्षीवत्-उदन्वत्-रुमण्वत्-चर्मण्वती । पा०८।२।१२,१३।

४० राजन्वान् सौराज्ये । पा०८।२।१४।

४१ कृपो रो लोऽकृपणादीनाम् । पा०८।२।१८+भा०।

४२ प्रादीनाम् अयतौ । पा०८।२।१९।

४३ ग्रो यङि । पा०८।२।२०।

४४ अचि वा । पा०८।२।२१।

४५ परेः घ-अङ्क-योगेषु । पा०८।२।२२+भा०।

४६ कपिरिकादीनाम् । पा०८।२।१८ भा०।

४७ डः ।

४८ सुपः प्रकृतेर्नो लोपः । पा०८।२।७।

४९ न संबुद्धौ । पा०८।२।८।

५० नपुंसके वा । पा०८।२।८ वा०२।

५१ लुपि बलि तद्वत् । पा०१।४।१७,१८।

५२ संयोगस्य पदस्य । पा०८।२।२३।

५३ रात् सः । पा०८।२।२४।

५४ धि सङि । पा०८।२।२५,२२ वा०१।

५५ झलः झलि । पा०८।२।२६।

५६ ह्रस्वात् । पा०८।२।२७।

५७ इटः ईटि । पा०८।२।२८।

५८ स्-कोः संयोगाद्योः अन्ते च । पा०८।२।२९।

५९ चोः कुः । पा०८।२।३०।

६० क्विनः । पा०८।२।६२।

६१ नग् वा । पा०८।२।६३।

६२ हः ढः । पा०८।२।३१।

६३ दादेर्धातोः घः । पा०८।२।३२।

६४ वा द्रुह-मुह-ष्णुह-ष्णिहाम् । पा०८।२।३३।

६५ नह-आहो धः । पा०८।२।३४,३५।
६६ व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-शां षः । पा०८।२।३६।
६७ झलः जश् । पा०८।२।३९।
६८ त-सोस्त-सौ मत्वर्थे । पा०१।४।१९।
६९ झषः एकाचः स्-ध्वोः बशो भष् । पा०८।२।३७।
७० धस्त-थोश्च । पा०८।२।३८।
७१ त-थोः धः अधः । पा०८।२।४०।
७२ सि ष-ढोः कः । पा०८।२।४१।
७३ मो नो म्वोश्च । पा०८।२।६४,६५।
७४ र-दात् त-त्वत्तोर्दश्च । पा०८।२।४२।
७५ यण्संयोगात् आतः । पा०८।२।४३।
७६ ॠ-ल्वादिभ्यः क्तिनश्च । पा०८।२।४४+वा०१।
७७ पूर्वः नाशे । पा०८।२।४४ वा०३।
७८ दु-ग्वोः ऊ च । पा०८।२।४४ वा०२।
७९ सेः ग्रासे । पा०८।२।४४ वा०४।
८० ओदितः । पा०८।२।४५।
८१ क्षेः क्षी च । पा०८।२।४६।
८२ वा भाव-आक्रोश-दैन्येषु । पा०६।४।६०,६१।
८३ श्यः अस्पर्शे । पा०८।२।४७।
८४ अञ्चः अनवधौ । पा०८।२।४८।
८५ अद्यूते दिवः । पा०८।२।४९।
८६ अवाते निर्वाणः । पा०८।२।५०।
८७ घ्रा-त्रा-अर्ति-ह्री-नुद-उन्द-विदो वा । पा०८।२।५६,६०।
८८ प्रस्त्यः मः । पा०८।२।५४।
८९ क्षः । पा०८।२।५३।
९० शुषः कः । पा०८।२।५१।
९१ पचो वः । पा०८।२।५२।
९२ ह्लादः ह्लद् । पा०६।४।९५।
९३ क्तिनि । काशिका ६।४।९५।
९४ फुल्ल-क्षीव-कृश-उल्लाघाः । पा०८।२।५५।
९५ न ध्या-ख्या-प-मूर्छि-मदाम् । पा०८।२।५७।
९६ वित्तः प्रतीत-भोगयोः । पा०८।२।५८।
९७ भित्तं शकले । पा०८।२।५९।
९८ ससजुषः रः । पा०८।२।६६।
९९ अह्नः । पा०८।२।६८।
१०० लुकि अरि रः । पा०८।२।६९।
१०१ प्रचेतसः राजनि वा । पा०८।२।७०वा०१।
१०२ पत्यादिषु अहरादीनाम् । पा०८।२।७० भा०।
१०३ दः अनडुहः । पा०८।२।७२।
१०४ वसु-स्रंसु-ध्वंसां सः । पा०८।२।७२।
१०५ तिपि । पा०८।२।७३।
१०६ सिपि रुर्वा । पा०८।२।७४।
१०७ दः । पा०८।२।७५।
१०८ धातोः र्-वोः अनचि इकः दीर्घः । पा०८।२।७६,७७।
१०९ न सुपि, यचि । पा०८।२।७९।
११० द्वित्वे । पा०८।२।७८ वा०१।
१११ कुरु-च्छुरोः । पा०८।२।७९।
११२ अदसः अत्वे दात् उ दः मः । पा०८।२।८०।
११३ अद्रौ वा । पा०८।२।८० भा०।
११४ एत ईत् । पा०८।२।८१।
११५ वाक्याचां प्लुतः अन्त्यः । पा०८।२।८२।
११६ दूराह्वाने । पा०८।२।८४।

११७ अनन्त्येऽपि हे-हैं। पा० ८।२।८५।

११८ गुरु एकैकम् अनृत् वा। पा० ८।२।८६।

११९ अस्त्री-शूद्रप्रत्यभिवादे। पा० ८।२।८३+वा० १।

१२० प्रत्युक्तौ हिः। पा० ८।२।९३।

१२१ उपालम्भे। पा० ८।२।९४।

१२२ अङ्गयुक्तं तिङ आकाङ्क्षम्। पा० ८।२।९६।

१२३ भर्त्सने द्विरुक्तं पर्यायेण। पा० ८।२।९५+वा० १।

१२४ असूया-संमत्योः पूर्वम्। पा० ८।२।१०३।

१२५ विचारे। पा० ८।२।९७,९८।

१२६ प्रतिश्रुतौ।। पा० ८।२।९९।

१२७ पूजिते। पा० ८।२।१००।

१२८ चिति उपमार्थे। पा० ८।२।१०१।

१२९ निन्दा-आशीः-प्रैष्येषु तिङ आकाङ्क्षम्। पा० ८।२।१०४।

१३० अनन्त्यस्यापि प्रश्न-आख्यानयोः। पा० ८।२।१०५।

१३१ एचः प्रश्नान्त-पूजा-विचार-प्रत्यभिवादेषु आत् इत्-उत्परः पा० ८।२।१०७+वा० २+भा०।

१३२ न एतो द्वित्वे। पा० ८।२।१०७।

१३३ तयोः य्-वौ अचि। पा० ८।२।१०८।

[षष्ठस्य अध्यायस्य तृतीयः पादः समाप्तः]

# [चतुर्थः पादः]

१ समः सुटि सः। पा० ८।३।५,१।

२ पुमः खयि अमि। पा० ८।३।६।

३ नः छवि अप्रशानः[1]। पा० ८।३।७।

४ कान् कानि। पा० ८।३।१२।

५ नॄन् पे रः वा। पा० ८।३।१०। काशिका ८।३।१०।

६ अत्र अनुनासिकः पूर्वस्य। पा० ८।३।२।

७ अनुस्वारः। पा० ८।३।४।

८ हलि मः। पा० ८।३।२३,२२।

९ नश्च अनन्त्यस्य झलि। पा० ८।३।२४।

१० सम्राट्। पा० ८।३।२५।

११ हे म-न-य-व-लपरे ते वा। पा० ८।३।२६,२७,२६ वा० १।

१२ ङ-णोः कुक्-टुकौ शरि। पा० ८।३।२८।

१३ डः सः धुट्। पा० ८।३।२९।

१४ नः। पा० ८।३।३०।

१५ शि तुक्। पा० ८।३।३१।

१६ मयः उञः अचि वः। पा० ८।३।३३,३२।

१७ ङमो ह्रस्वात् द्वे। पा० ८।३।३२।

१८ ढे अनादौ ढलोपः। पा० ८।३।१३+वा० १।

१९ रः रि। पा० ८।३।१४।

२० विरामे विसर्जनीयः। पा० ८।३।१५।

२१ खरि। पा० ८।३।१५।

---

१ मूलसूत्रपाठपुस्तके 'अप्रशान्' इति।

२२ शर्परे । पा०८।३।३५।
२३ रोः सुपि । पा०८।३।१६।
२४ भो-भगो-अघोऽभ्यः अशि लोपः । पा०८।३।१७,२०।
२५ आत् । पा०८।३।१७।
२६ यः अचि वा अनुञि । पा०८।३।१७,२१,२२।
२७ व्-योः ईषत्स्पृष्टौ च । पा०८।३।१८।
२८ छवि रः सः । पा० ८।३।३४।
२९ वा शरि । पा०८।३।३६।
३० खरि लोपः । पा०८।३।३६ वा०१।
३१ कु-प्वोः )(क ⁐पौ । पा०८।३।३७।
३२ ससंख्यस्य अनादौ सः । पा०८।३।३८+वा०१।
३३ रोः काम्ये । पा०८।३।३८ वा०२।
३४ इणः षः । पा०८।३।३९।
३५ निर्-दुर्-बहिर्-आविर्-चतुर्-प्रादुर्-पुरसाम् । पा०८।३।४१,४०।
३६ सुचो वा । पा०८।३।४३।
३७ इस्-उसोः संबन्धे । पा०८।३।४४।
३८ प्लुतात् ति च । पा०८।३।४१ वा०२।
३९ समासे अनुत्तरस्य । पा०८।३।४५।
४० अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीषु ससंख्यस्य । पा०८।३।४६।
४१ अधः–शिरसोः पदे । पा०८।३।४७।
४२ नमसः । पा०८।३।४०।
४३ कृञि वा । पा०१।४।७४।
४४ तिरसः । पा०१।४।७२।
४५ कस्कादयः । पा०८।३।४८।
४६ कोश्च आदेश-सनादि-शासि-वसि-घसां सः । पा०८।३।५७,५९,६०,५६।
४७ नुम्-विसर्जनीय-शर्व्यवाये । पा०८।३।५८।
४८ स्तोः षणि: । पा०८।३।६१।
४९ णेः अस्विदि-स्वदि-सहः । पा०८।३।६१,६२।
५० प्रादीनां सु-सू-सो-स्तु-स्तुभ-स्था-सेनि-सेध-सिच-सञ्ज-स्वञ्जाम् पा०८।३।६५।
५१ सदः अप्रतेः । पा०८।३।६६।
५२ स्तम्भेः । पा०८।३।६७।
५३ अवात् औजित्य-आलम्बन-अविदूर्येषु । पा०८।३।६८।
५४ वेश्च स्वनः भोजने । पा०८।३।६९।
५५ नि-परेश्च सेव-सिवु-सह-सुटाम् पा०८।३।७०।
५६ स्तु-स्वञ्ज-सिवादीनां वा अड्व्यवाये । पा०८।३।७०,७१।
५७ स्वादीनाम् । पा०८।३।६३।
५८ स्थादीनां द्विरुक्तेन तस्य च । पा०८।३।६४।
५९ नेः सय-सितयोः । पा०८।३।७०।
६० वि-परेः पा०८।३।७०।
६१ निर्-अभि-अनोश्च स्यन्दः अप्राणिनि वा । पा०८।३।७२।
६२ वेः स्कन्दः अत-तवतोः । पा०८।३।७३।
६३ परेः । पा०८।३।७४।
६४ स्फुरि-स्फुलोः निर्-नि-विभ्यः । पा०८।३।७६।
६५ वेः स्कभ्नः षः । पा०८।३।७७।
६६ समासे अङ्गुलेः सङ्गः । पा०८।३।८०।
६७ भीरोः स्थानम् । पा०८।३।८१।
६८ अग्नेः स्तुत् । पा०८।३।८२।
६९ ईतः सोमः । पा०८।३।८२+वा०१।
७० ज्योतिर्-आयुषश्च स्तोमः । पा०८।३।८३,८२।

७१ मातृ-पितृभ्यां स्वसा। पा०८।३।८४।
७२ अलुकि वा। पा०८।३।८५।
७३ अभिनिष्टानो वर्णे। पा०८।३।८६।
७४ प्रादुः-प्रादिभ्यः यचि अस्तेः। पा०८।३।८७।
७५ सु-वि-निर्-दुर्भ्यः सम-सूति-सुपाम्। पा०८।३।८८।
७६ नदीष्णः कुशले। पा०८।३।८९।
७७ नेः स्नातः पा०८।३।८९।
७८ प्रतेः सूत्रे। पा०८।३।९०।
७९ प्रष्ठः अग्रगामी। पा०८।३।९२।
८० वेः स्त्रः नाम्नि। पा०८।३।९३,९४।
८१ गवि-युधेः स्थिरः। पा०८।३।९५।
८२ कपेः स्थलस्य। पा०८।३।९१।
८३ वि-कु-शमि-परिभ्यः। पा०८।३।९६।
८४ अम्ब-आम्ब-गो-भूमि-द्वि-त्रि-कु-शेकु-शङ्कु-अङ्गु-मञ्जि-पुञ्जि-बर्हिस्-दिवि-अग्निभ्यः स्थः। पा०८।३।९७।
८५ एति संज्ञायाम् अकोः। पा०८।३।९९।
८६ नक्षत्रात् इतो वा। पा०८।३।१००।
८७ ह्रस्वात् सुपः ति। पा०८।३।१०१।
८८ निसः तपि सकृत्। पा०८।२।१०२।
८९ सुषामादयः। पा०८।३।९८।
९० न आदि-अन्तयोः। पा०८।३।१११।
९१ सात्। पा०८।३।१११।
९२ सिचः यङि। पा०८।३।११२।
९३ सिधः गतौ। पा०८।३।११३।
९४ नि-प्रतेः स्तब्धः। पा०८।३।११४।
९५ सोढः। पा०८।३।११५।
९६ प्रादिभ्यः स्तम्भु-सिवु-सहां चङि। पा०८।३।११६+वा०१।
९७ सोः स्य-सनोः। पा०८।३।११७।
९८ सदि-स्वञ्जेः लिटि। पा०८।३।११८+भा०१।
९९ धातोः सीलृङ्लोश्च धः ढः। पा०८।३।७८।
१०० वेटः। पा०८।३।७९।
१०१ र-पात् नः णः एकपदे। पा०८।४।१।
१०२ पूर्वपदात् नाम्नि। पा०८।४।३।
१०३ वनं पुरगा-मिश्रका-सिध्रका-शारिका-अग्रे-कोटरात्। पा०८।४।४।
१०४ प्र-निर्-अन्तः-शर-इक्षु-प्लक्ष-आम्र-कार्ष्य-पीयूक्षा-खदिरात्। पा०८।४।५।
१०५ वा औषधिवृक्षात् द्वि-त्र्यचः अनिरिकादेः पा०८।४।६+भा०।
१०६ अह्नः अतः। पा०८।४।७।
१०७ त्रि-चतुर्भ्यां हायनो वयसि। पा०४।१।२७ भा०। काशिका ४।१।२७।
१०८ वाहनं वाह्यात्। पा०८।४।८।
१०९ पानं देशे। पा०८।४।९।
११० वा भाव-करणयोः। पा०८।४।१०।
१११ गिरिनद्यादीनाम्। पा०८।४।१० वा०१।
११२ समस्तान्त-समीपयोः अयुवादीनाम्। पा०८।४।११ वा०१,३।
११३ कुमत्-एकाचः। पा०८।४।१२,१३।
११४ प्रादि-अन्तरः अदुरः णः। पा०८।४।१४। पा०१।४।६५ वा०१। पा०१।४।६० वा०७।
११५ हिनु-मीना-आनि। पा०८।४।१५,१६।

११६ नेः गद-नद-पत-पद-दा-धा-मा-वा-दिह्-वह्-शम-हन-या-सा-द्रा-प्सा-चि-वपिषु । पा०८।४।१७।

११७ अक-खादौ अषान्ते पाठे वा । पा०८।४।१८।

११८ अनः अन्ते च । पा०८।४।१९,२० ।

११९ हनः । पा०८।४।२२।

१२० व्-मोः वा । पा०८।४।२३।

१२१ अन्तरः अयनस्य च अदेशे । पा०८।४।२४,२५।

१२२ सुपि अचः । पा०८।४।२६।

१२३ निर्विण्णः । पा०८।४।२९ वा०१।

१२४ णेर्वा । पा०८।४।३०।

१२५ हलादेः इक्उपान्तात् । पा०८।४।३१।

१२६ नुमि इच्-आदेर्हलः । पा०८।४।३२।

१२७ वा निक्ष-निंस-निन्दाम् । पा०८।४।३३।

१२८ न भा-भू-पूञ्-कमि-गमि-प्यायी-वेपाम् । पा०८।४।३४+वा०१।

१२९ षः पदे । पा०८।४।३५।

१३० नशेः ष्-कः । पा०८।४।३६+वा०१।

१३१ अन्ते । पा०८।४।३७।

१३२ चु-टु-तु-ल-शर्व्यवाये । पा०८।४।२।

१३३ सुपा अनाङ्-मयेन । पा०८।४।३८। पा०८।४।२। पा०८।४।३८ भा०।

१३४ घा हः । पा०८।४।२२। पा०८।४।२। वा०४,५।

१३५ क्षुभ्नादीनाम् । पा०८।४।३९।

१३६ स्-तोः श्-चु-ष्-टुभ्यां तौ । पा०८।४।४०,४१।

१३७ न टोः अनवति-नगर्योः आदेः । पा०८।४।४२+भा०।

१३८ तोः षि । पा०८।४।४३।

१३९ शात् । पा०८।४।४४।

१४० यरः ञमि ञम् वा । पा०८।४।४५।

१४१ अचः र-हात् द्वे । पा०८।४।४६।

१४२ अनचि । पा०८।४।४७।

१४३ यणः मयः । पा०८।४।४७ वा०१।

१४४ शरः खयः । पा०८।४।४७ वा०२।

१४५ न आक्रोशे पुत्रस्य आदिनि तत्परे च । पा०८।४।४८+वा०१।

१४६ शरः अचि रात् । पा०८।४।४९।

१४७ दीर्घात् । पा०८।४।५२।

१४८ खरि चर् झलः । पा०८।४।५५।

१४९ वा विरामे । पा०८।४।५६।

१५० अणः अनुनासिकः । पा०८।४।५७।

१५१ अनुस्वारस्य ययि यम् । पा०८।४।५८।

१५२ पदादौ वा । पा०८।४।५९।

१५३ तोः लि । पा०८।४।६०।

१५४ उदः स्था-स्तम्भोः तः । पा०८।४।६१।

१५५ हलः झरां झरि सस्थाने लोपो वा । पा०८।४।६५।

१५६ झयः हो झय् । पा०८।४।६२।

१५७ शः छः अमि । पा०८।४।६३।

१५८ चयः शरि द्वितीयः । पा०८।४।४८। वा०३।

[षष्ठस्य अध्यायस्य चतुर्थः पादः समाप्तः]

॥ चान्द्रे व्याकरणे सूत्रस्य षष्ठः अध्यायः समाप्तः ॥

[आचार्यचन्द्रगोमिकृतं चान्द्रं व्याकरणं मूलसूत्रपाठतः समाप्तम्]

# अकारादिक्रमेण चान्द्रव्याकरणसूत्रनिर्दिष्टगणानां तत्तत्सूत्रनिर्देशपूर्वकं सूचिः ।

५६ क्रीआदि (धातुगण) १।१।१०१।
५७ क्रोडादि २।३।६७।
५८ क्रौडिआदि २।३।८४।
५९ क्षिपकादि ६।१।७९।
६० क्षुभ्नादि ६।४।१३५।
६१ खलादि ३।१।५७।
६२ गमादि (धातुगण) ५।३।४९।
६३ गर्गादि २।४।२४।
६४ गवाश्वादि २।२।५७।
६५ गहादि ३।२।५८।
६६ गिरिनद्यादि ६।४।१११।
६७ गृष्टयादि २।४।७७।
६८ गोआदि ४।१।२।
६९ गोणीआदि २।२।८७।
७० गोपवनादि २।४।११६।
७१ गोसदादि ४।२।१५६।
७२ गौरादि २।३।३७।
७३ ग्रहादि (धातुगण) १।१।१४०।
५।४।१२९।
७४ चत्वारिंशत्आदि ५।२।५४।
७५ चुरादि (धातुगण) १।१।४५।
७६ चूडादि ४।१।१३०।
७७ छत्रादि ३।४।६३।
७८ छेदादि ४।१।७५।
७९ जक्षादि (धातुगण) १।४।५।
८० ज्योत्स्नादि ४।२।१०७।
८१ ज्वलादि (धातुगण) १।१।१४६।
८२ डतरादि (प्रत्यय) २।१।२५।
८३ तनादि (धातुगण) १।१।६४।
१।१।९४।
५।३।३५।
८४ तारकादि ४।२।३७।
८५ तालादि ३।३।१०६।
८६ तिकादि २।४।८६।
८७ तिककितवादि २।४।११५।
८८ तिष्ठद्गुआदि २।२।१०।
८९ तुदादि (धातुगण) १।१।९२।
९० तौल्वल्यादि २।४।१२२।
९१ त्यदादि १।२।५१।
२।४।८९।
३।२।२८।
५।४।६८।
९२ दण्डादि ४।१।७९।
९३ दधिपयस्आदि २।२।६६।
९४ दामनि-आदि ४।३।९२।
९५ दिवादि (धातुगण) १।१।८७।
९६ दिश्आदि ३।३।१७।
९७ दृढादि ४।१।१४०।
९८ देवादि ४।४।४०।
९९ देवव्रतादि ४।१।१०९।
१०० देवासुरादि ३।३।५७।
३।३।८९।
१०१ द्युतादि १।१।७३।
१।४।१४३।
१०२ द्वारादि ६।१।१५।
१०३ द्विदण्डिआदि ४।४।११७।
१०४ धूमादि ३।२।४१।
१०५ नखादि ५।२।९५।
१०६ नडादि २।४।३५।
१०७ नद्यादि ३।२।६।
१०८ नन्दादि (धातुगण) १।१।१४०।
१०९ नवयज्ञादि ४।२।१२४।
११० निकटादि ३।४।७४।
१११ निजादि (धातुगण) ६।२।१२७।

११२ नौ-आदि २।१।८०।
४।२।११८।
११३ न्यङ्कुआदि ६।१।८४।
११४ पक्षादि ५।२।१०३।
११५ पत्यादि ६।३।१०२।
११६ परदारादि ३।४।४५।
११७ परिमुखादि ३।३।२३।
११८ पर्पादि ३।४।८।
११९ पर्शुआदि ४।३।९३।
१२० पाण्यादि १।२।१४।
१२१ पात्रादि २।२।८०।
१२२ पामन्-आदि ४।२।१०४।
१२३ पारस्करादि ५।१।१४२।
१२४ पाशादि ३।१।५६।
१२५ पिच्छादि ४।२।१०३।
१२६ पील्वादि ४।२।२४।
१२७ पुण्याहवाचनादि ४।१।१३४।
१२८ पुष्आदि (धातुगण) १।१।७३।
१२९ पुष्करादि ४।२।१३२।
१३० पूआदि (धातुगण) ६।१।१०८।
१३१ पूर्वादि २।१।१५।
१३२ पृथु ४।१।१३९।
१३३ पृषोदरादि ५।२।१२७।
१३४ पिङ्गाक्षिपुत्रादि ३।१।२४।
१३५ पैलादि २।४।१२१।
१३६ प्रादि १।१।१०९।
१।१।१४२।
१।१।१४४।
१।१।१५०।
१।२।२।
१।३।११।
१।३।१४।
१।३।४९।
१।३।५१।
१।३।५८।
१।३।७१।
१।३।८७।
१।४।७२।
१।४।८९।
१।४।११७।
१।४।१२९।
२।२।२४।
४।४।७१।
४।४।११०।
५।१।९३।
५।२।११३।
५।२।१४१।
५।४।२१।
५।४।२३।
६।१।५९।
६।२।७५।
६।२।९७।
६।३।४२।
६।४।५०।
६।४।७४।
६।४।९६।
६।४।११४।
१३७ प्रज्ञादि ४।४।२२।
१३८ प्रतिजनादि ३।४।१०१।
१३९ प्रभूतादि ३।४।४७।
१४० प्रियाआदि ५।२।२९।
१४१ फण् आदि (धातुगण) ५।३।१२१।
१४२ बाहीकादि ३।२।२०।
१४३ बाहुआदि २।४।२०।

१४४ बिदादि २।४।२२।
१४५ बिल्वकीयादि ५।३।१५७।
१४६ ब्राह्मणादि ४।१।१४१।
१४७ भर्गादि २।४।१०६।
१४८ भस्त्रादि ३।४।१५।
१४९ भिक्षादि ३।१।४४।
१५० भिदादि (धातुगण) १।३।८६।
१५१ भृशादि १।१। ३०।
१५२ भौरिकिआदि ३।१।६३।
१५३ भ्रूकुंसादि ५।२।७२।
१५४ मनोज्ञादि ४।१।१४९।
१५५ महानाम्नीआदि ४।१।१०७।
१५६ महिषीआदि ३।४।५०।
१५७ 'मा' शब्दादि ३।४।४८।
१५८ मुचादि (धातुगण) ५।४।११।
१५९ यजादि (धातुगण) ५।१।१४।
१६० यवादि ६।३।३८।
१६१ यस्कादि २।४।११०।
१६२ यावादि ४।४।१२।
१६३ युवन्आदि ४।१।१४६।
६।४।११२।
१६४ यूपादि ४।१।३।
१६५ रज्जुआदि २।३।७६।
१६६ रधादि (धातुगण) ५।४।१०८।
१६७ राजन्यादि ३।१।६२।
१६८ रुदादि (धातुगण) ५।४।१७३।
६।२।३७।
१६९ रुधादि (धातुगण) १।१।९३।
१७० रेवत्यादि २।४।७८।
१७१ रैवतिक ३।३।९६।
१७२ लू आदि (धातुगण) ६।३।७६।
१७३ लोमन् आदि ४।२।१०४।
१७४ लोहितादि १।१।३१।
१७५ लोहितादि २।३।२०।
१७६ वंशादि ४।१।७२।
१७७ वाकिनादि २।४।९१।
१७८ विंशत्यादि ४।२।५२।
१७९ विनयादि ४।४।१७।
१८० विमुक्तादि ४।२।१५५।
१८१ वृत्आदि (धातुगण) १।४।१४४।
५।४।१२३।
१८२ वेणुकादि ३।२।६१।
१८३ वेतनादि ३।४।४०।
१८४ व्यासादि २।४।२१।
१८५ व्युष्टादि ४।१।११५।
१८६ व्रीहिआदि ४।२।११९।
१८७ शकादि (धातुगण) ५।४।१३५।
१८८ शकन्धुआदि ५।१।९८।
१८९ शकलादि ३।२।२१।
१९० शण्डिकादि ३।३।६०।
१९१ शतादि ४।२।५३।
१९२ शब्दादि १।१।३६।
१९३ शमादि (धातुगण) ६।१।१०२।
१९४ शरादि ३।३।११४।
५।२।१३४।
१९५ शरद्आदि ४।४।९०।
१९६ शर्करादि ४।३।८४।
१९७ शाखादि ४।३।८१।
१९८ शिखादि ४।२।१३४।
१९९ शिवादि २।४।४१।
२०० शिशुक्रन्दादि ३।३।५६।
२०१ शुण्डिकादि ३।३।४८।
२०२ शुभ्रादि २।४।५३।

[इति चान्दसूत्रोक्तगणसूचिः समाप्ता]

# [ स्वर-व्यञ्जनानां स्थान-करण-प्रयत्नपरिचयः[1] ]

**स्थान-करण-प्रयत्नेभ्यो वर्णा जायन्ते।**

(१) तत्र स्थानम् —

कण्ठः अ-कु-ह-विसर्जनीयानाम् ।
कण्ठ-तालुकम् इत्-एत्-ऐताम् ।
कण्ठ-ओष्ठम् उत्-ओत्-औताम् ।
मूर्धा ऋ-टु-र-षाणाम् ।
दन्ता लृ-तु-ल-सानाम् ।
नासिका अनुस्वारस्य ।
स्वस्थान-अनुनासिका ङ-ञ-ण-न-माः ।
तालु इ-चु-य-शानाम् ।
ओष्ठौ उ-पु-उपध्मानीयानाम् ।
दन्त-ओष्ठम् वकारस्य ।
जिह्वामूलम् जिह्वामूलीयस्य ॥

(२) करणम् —

जिह्वाग्रम् दन्त्यानाम् ।
जिह्वोपाग्रम् शिरस्यानाम् ।
जिह्वामध्यम् तालव्यानाम् ।
शेषाः स्वस्थानकरणाः ॥

(३) प्रयत्नः द्विविधः-आभ्यन्तरः बाह्यश्च । तत्र आभ्यन्तरः —

संवृतत्वम् विवृतत्वम् स्पृष्टत्वम् । ईषत्स्पृष्टत्वं च ।
संवृतत्वम् अकारस्य ।
विवृतत्वम् स्वराणाम् ऊष्मणां च ।
तेभ्यः विवृततरत्वम् एत्-ओतोः ।
ताभ्याम् ऐत्-औतोः । ताभ्यामपि आकारस्य ।
स्पृष्टत्वम् स्पर्शानाम् ।
ईषत्स्पृष्टत्वम् अन्तःस्थानाम् ।

बाह्यः —

वर्गाणां प्रथम-द्वितीयाः श-ष-स-विसर्जनीय - जिह्वामूलीय - उपध्मानीयाश्च विवृतकण्ठाः श्वासानुप्रदानाः अघोषाश्च ।

प्रथम - तृतीय - पञ्चमाः अन्तःस्थाश्च अल्पप्राणाः ।

इतरे महाप्राणाः ।

तृतीय - चतुर्थ - पञ्चमाः सानुस्वार-अन्तःस्थ-हकाराः संवृतकण्ठाः नादानुप्रदानाः घोषवन्तः ।

द्वितीय - चतुर्थाः श - ष - स - हाश्च ऊष्माणः ।

कादयः मावसानाः स्पर्शाः ।

अन्तःस्था य-र-ल-वा इति एष बाह्यप्रयत्नः ।

अत्र च अवर्णः ह्रस्वः दीर्घः प्लुत इति त्रिधा भिन्नः ।

प्रत्येकम् उदात्त-अनुदात्त-स्वरितभेदेन सानुनासिक-निरनुनासिकभेदेन च अष्टादशधा भवति ।

एवम् इवर्ण-उवर्णौ ऋवर्णश्च ।

लृवर्णस्य दीर्घा न सन्ति तेन स द्वादशधा भवति ।

सन्ध्यक्षराणां ह्रस्वाभावात् तानि अपि द्वादशधा ।

एकमात्रिकः ह्रस्वः ।
द्विमात्रिकः दीर्घः ।
त्रिमात्रिकः प्लुतः ।
उच्चैः उदात्तः ।
नीचैः अनुदात्तः ।
समाहारः स्वरितः ।
स्वस्थानानुनासिकः निरनुनासिकश्च ।

अन्तःस्थाः द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च ।

**[ इति चन्द्रगोमिकृतं वर्णसूत्रं समाप्तम् ]**

---

१ एतद्विषयः "इकः असस्थाने ह्रस्वश्च असमासे" ५।२।१३२। इत्यस्मिन् सूत्रे प्रयुक्ते 'सस्थान' शब्दे ।

॥ नमो मञ्जुघोषाय ॥

# आचार्यश्रीचन्द्रगोमिविरचितम् उणादिप्रकरणम्

उणादयः । १।३।१।

१ कृ-वा-पा-जि-मि-स्वदि-साधि-अशूभ्यः उण् ।

कारुः शिल्पी ।

वायुः समीरणः ।

पायुः अपानम् ।

जायुः औषधम् ।

मायुः पित्तम् ।

गोमायुः सृगालः ।

स्वादुः मधुरम् ।

साधुः परोपकारी ।

आशु शीघ्रम् धान्यनाम च ।

२ दृ-सनि-जनि-चरि-चटि-तलिभ्यः ञुण् ।

दारु काष्ठम् ।

सानुः गिरिप्रदेशः ।

जानु जङ्घास्थानम् ।

चारु शोभनम् ।

चाटुः स्फुटवादी ।

तालुः वदनैकदेशः ।

३ किम्-जराभ्याम् शृ-इणः ।

किशारुः शारः ।

जरायुः गर्भवेष्टनम् ।

४ कृकात् वचः कश्च ।

कृकवाकुः कुक्कुटः कृकलासश्च ।

५ भृ-मृ-तृ-चरि-तनि-मस्जि-शीभ्यः उः ।

भरुः भर्ता ।

मरुः निर्जलो देशः ।

तरुः पादपः ।

चरुः हविष्यान्नम् ।

तनुः शरीरम् ।

मद्गुः पक्षिविशेषः ।

शयुः अजगरः ।

६ अणः ।

अणु सूक्ष्मम् ।

७ धान्ये नित् ।

अणुः व्रीहिः ।

८ पटि-असि-वसि-त्रपि-हनि-मनि-इन्दि-कन्दि-बन्धिभ्यः ।

पटुः स्फुटवादी ।

असुः प्राणः ।

वसु द्रव्यम् ।

त्रपु सीसम् ।

हनुः वदनैकदेशः ।

मनुः प्रजापतिः ।

इन्दुः चन्द्रमाः ।

कन्दुः पाकस्थानम् ।

बन्धुः स्वजनः ।

९ बहि-पंसेः दीर्घश्च ।

बाहुः भुजः ।

पांसुः रेणुः ।

१० नमि-मनि-जनां नाकि-ध-तश्च ।

नाकुः वल्मीकम् ।

मधु क्षौद्रम् ।

जतु लाक्षा ।

११ वलि-फलेः गुक् च ।

वल्गुः मनोज्ञः ।

फल्गुः असारः ।

१२ **नेः अञ्चेः ।**

न्यङ्कुः मृगः ।

१३ **इषि-भिदि-व्यधि-गृधि-धृषि-पॄ-पृथि-मृदेः कुः ।**

इषुः शरः ।

भिदुः वज्रम् ।

विधुः अग्निः ।

गृधुः कामः ।

धृषुः प्रगल्भः ।

पुरुः समुद्रः ।

पृथुः विस्तीर्णः

मृदुः मर्दितः ।

१४ **शशि-रपयोः अतः इत् च ।**

शिशुः बालः

रिपुः शत्रुः ।

१५ **कॄ-ग्रोः उत् च ।**

कुरुः राजा ।

गुरुः आचार्यः ।

१६ **अर्तेः ऊत् च ।**

ऊरुः सक्थि ।

उरुः महान् ।

१७ **स्यन्देः यणः इक् धश्च ।**

सिन्धुः नदी ।

१८ **भ्रस्जि-स्पशेः सलोपश्च ।**

भृगुः प्रपातः ।

पशुः चतुष्पादः ।

१९ **सृजेः असुम् च ।**

रज्जुः द्वित्रिवृत्ता ।

२० **आखनि-बंहेः नलोपश्च ।**

आखुः मूषिकः ।

बहु भूरि ।

२१ **शङ्कुआदयः ।**

शङ्कुः चिह्नम्

तर्कुः कर्तनद्रव्यम् ।

शरुः आयुधम् ।

त्सरुः दर्पणदण्डः ।

धनुः शस्त्रम् ।

मयुः किन्नरः ।

अपष्ठुः बालः ।

सुष्ठु शोभनम् ।

दुष्ठुः दुर्विनीतः ।

हरिद्रुः वृक्षजातिः ।

मितद्रुः समुद्रः ।

मित्रयुः मित्रवत्सलः ।

शतद्रुः नदी ।

देवयुः धार्मिकः ।

कुमारयुः कुमारघाती ।

मृगयुः व्याधः ।

जटायुः पक्षी ।

पटायुः वस्त्रम् ।

२२ **सि-तनि-गमि-मसि-सचि-अवि-धाञ्-क्रुशिभ्यः तुन् ।**

सेतुः जलबन्धः ।

तन्तुः सूत्रम् ।

गन्तुः पथिकः ।

आगन्तुः अभ्यागतः ।

मस्तु दध्यवयवः ।

सक्तुः यवविकारः ।

ओतुः विडालः ।

धातुः लोहादिः ।

क्रोष्टुः सृगालः ।

२३ **वसेः णित् वा ।**

वास्तुः गृहभूमिः ।

वस्तु पदार्थः ।

२४ कसि-मनि-जनि-हिभ्यः तुः ।
कन्तुः कन्दर्पः ।
मन्तुः प्रजापतिः ।
जन्तुः प्राणी ।
हेतुः कारणम् ।

२५ ऋतुआदयः ।
ऋतुः हेमन्तादिः ।
क्रतुः ससोमको यज्ञः ।
केतुः ध्वजः ।
पीतुः सूर्यः ।
गातुः उद्गाता ।
भातुः भास्करः ।
यातुः कामुकः ।
एधतुः पुरुषः ।
वहतुः अनड्वान् ।
जीवातुः औषधम् ।
अप्तुः याज्ञिकः ।

२६ स्तनि-हृषि-पुषि-गदि-मदिभ्यः णेः इत्नुच् ।
स्तनयित्नुः मेघः ।
हर्षयित्नुः सुवर्णम् ।
पोषयित्नुः कोकिलः ।
गदयित्नुः वावदूकः ।
मदयित्नुः सुरा ।

२७ हृ-कोः एणुः ।
हरेणुः गन्धद्रव्यम् ।
करेणुः हस्ती ।

२८ दा-भाभ्यां नुः ।
दानुः दाता ।
भानुः भास्करः ।

२९ री-वृञोः नित् ।
रेणुः धूलिः ।
वर्णुः नदः ।

३० सू-विषिभ्यां कित् ।
सूनुः पुत्रः ।
विष्णुः नारायणः ।

३१ धेनुआदयः ।
धेनुः नवप्रसूता गौः ।
जह्नुः ऋषिः ।
स्थाणुः महादेवः ।
वेणुः वंशः ।
वग्नुः वावदूकः ।

३२ क्षिपि-नदिभ्यां चनुङ् ।
क्षिपणुः वायुः ।
नदनुः मेघः ।

३३ सर्तेः अयुः ।
सरयुः नदी ।

३४ जनि-मनि-दसि-भुजेः क्युस् ।
जन्युः प्राणी ।
मन्युः क्रोधः ।
दस्युः चौरः ।
भुज्युः ओदनः ।

३५ ह्री-इषि-कृशिभ्यः कुक् सुग् आनुक् ।
ह्रीकुः अधृष्टः ।
ह्लीकुः स एव ।
इक्षुः खाद्यविशेषः ।
कृशानुः वह्निः ।

३६ मृङः त्युक् ।
मृत्युः प्राणवियोगः ।

३७ शीङः धुक् ।
शीधुः सुराविशेषः ।

३८ शृन्-अशुचौ पुरः ।
पर्शुः पार्श्वास्थि ।
परशुः कुठारः ।

३९ **पी-म्योः रुः ।**
पेरुः भास्करः ।
मेरुः पर्वतराजः ।
सुमेरुः स एव ।

४० **जत्रुआदयः ।**
जत्रु ग्रीवाप्रदेशः ।
शत्रुः अमित्रः ।
रुरुः मृगः ।
श्मश्रु मुखरोम ।
खरुः दर्पः ।
शिग्रुः शोभाञ्जनकः ।

४१ **योः आगूच् ।**
यवागूः पेया ।

४२ **भ्रमेः डूः ।**
भ्रूः नेत्रोपरिस्थानम् ।

४३ **चमि-तनि-बधिभ्यः ऊः ।**
चमूः सेना ।
तनूः शरीरम् ।
वधूः पुत्रभार्या ।

४४ **कषेः छश्च ।**
कच्छूः पामा ।

४५ **तिरः दुट् च ।**
तर्दुः परिवेषणभाण्डम् ।

४६ **यालोपः दरिद्रः ।**
दर्द्रूः कुष्ठविकारः ।

४७ **जम्बूआदयः ।**
जम्बूः वृक्षजातिः ।
दृन्भूः सर्पजातिः ।
दिधिषुः रण्डिका ।
पुनर्भूः पुनरूढिका ।
कर्कन्धूः वदरीफलम् ।
आडूः जलतरणी ।
अलाबूः तुम्बीफलम् ।
कषेरूः भक्षणद्रव्यम् ।
कासूः विकलवाक् ।
पादूः पादधारणी ।
सर्जूः विद्युत् ।
खर्जूः वृक्षजातिः ।
मर्जूः मलविशुद्धभाण्डम् ।
नृतूः दीर्घकृमिः ।
शृधूः यज्ञः ।
कर्षूः शुष्कगोमयाग्निः ।
कम्बूः परद्रव्यापहारी ।
रतूः नदी ।
अन्दूः भूषणजातिः ।
कफेलूः श्लेष्मातकः ।

४८ **दिवेः ऋन् ।**
देवा पतिभ्राता ।

४९ **नियो डित् ।**
ना पुरुषः ।

५० **पितृआदयः ।**
पिता जनकः ।
माता जननी ।
दुहिता आत्मजा ।
ननान्दा पतिभगिनी ।
भ्राता सोदर्यः ।
जामाता दुहितृपतिः ।
स्वसा भगिनी ।
नप्ता पौत्रः ।
नेष्टा ऋत्विक् ।
त्वष्टा आदित्यः ।
क्षत्ता प्रतीहारः ।
होता विष्णुः ।
पोता बालः ।

प्रशास्ता उपाध्यायः ।

५१ रवि-कवि-दरि-शरि-वलि-वल्लि-ध्वनि-अवि-हरि-ग्रन्थिभ्यः इः ।

रविः सूर्यः ।
कविः काव्यकर्ता ।
दरिः प्रपातः ।
शरिः शारः ।
बलिः असुरेन्द्रः ।
वल्लिः शाखा ।
ध्वनिः शब्दः ।
अविः मेषः ।
हरिः विष्णुः ।
ग्रन्थिः पर्वसन्धिः ।

५२ इगुपान्तात् किः ।

क्षिपिः योद्धा ।
शुचिः विविक्तः ।
रुचिः अभिलाषः ।
कृषिः कर्षणम् ।

५३ क्रमः अतः इत् च ।

क्रिमिः क्षुद्रजन्तुः ।

५४ मनेः उत् च ।

मुनिः ऋषिः ।

५५ अंहि-कम्पोः नलोपश्च ।

अहिः सर्पः ।
कपिः वानरः ।

५६ शृ-वसि-वपि-राजि-वृ-हनि-नभेः इञ् ।

शारिः शारिका ।
वासिः तक्षकभाण्डम् ।
वापिः पुष्करिणी ।
राजिः पङ्क्तिः ।
वारि सलिलम् ।
घातिः प्रहरणम् ।
नाभिः शरीरावयवः ।

५७ अजि-जनि-अति-घसि-रशि-पणेः इण् ।

आजिः युद्धम् ।
जनिः माता ।
आतिः गमनम् ।
घासिः अग्निः ।
राशिः समूहः ।
पाणिः करः ।

५८ वेञः डिः ।

विः पक्षी ।

५९ नेः ईत् च ।

नीविः मेखला ।

६० सखीआदयः ।

सखा मित्रम् ।
अश्रिः कोटिः ।
प्रहिः कूपः ।
भ्रमिः वायुः ।
कारिः शिल्पी ।

६१ सञ्ज्-असिभ्यां क्थिन् ।

सक्थि ऊरुप्रदेशः ।
अस्थि शरीरावयवः ।

६२ सारेः अथिन् ।

सारथिः रथवाहः ।

६३ अङ्गि-अतिभ्याम् उरि-इथिनौ ।

अङ्गुरिः करावयवः ।
अङ्गुलिः स एव ।
अतिथिः अभ्यागतः ।

६४ **नी-दलिभ्यां मिः।**
नेमिः शकटम् ।
दल्मिः शक्रः ।

६५ **ऊर्मि-रश्मि-भूमयः ।**
ऊर्मिः तरङ्गः ।
रश्मिः प्रभा ।
भूमिः पृथ्वी ।

६६ **कुषेः सिक् ।**
कुक्षिः उदरम् ।

६७ **अशेः नित् ।**
अक्षि नेत्रम् ।

६८ **मृ-कणिभ्याम् ईचिः ।**
मरीचिः मयूखः
कणीचिः लता ।

६९ **रा-शदिभ्यां त्रिप् ।**
रात्रिः क्षपा ।
शत्त्रिः कुञ्जरः ।

७० **भू-सूङ्-अदिभ्यः क्रिन् ।**
भूरि प्रभूतम् ।
सूरिः आदित्यः ।
अद्रिः पर्वतः ।

७१ **शकि-भूभ्याम् उन्ति-अन्तिचौ ।**
शकुन्तिः पक्षी ।
भवन्तिः कालः ।

७२ **अर्तेः अत्तिच् ।**
अरत्तिः करः ।

७३ **अञ्जेः अलिच् ।**
अञ्जलिः करसम्पुटः ।

७४ **ऋ-तॄ-सृ-धृ-धमि-अशि-अवि-वृति-ग्रहेः अनिः ।**
अरणिः अग्निकाष्ठम् ।
तरणिः समुद्रः ।
सरणिः पन्थाः ।
धरणिः पृथ्वी ।
धमनिः गलसिरा ।
अशनिः वज्रः ।
अवनिः पृथ्वी ।
वर्तनिः कर्तनद्रव्यम् ।
ग्रहणिः वह्निस्थानम् ।

७५ **क्षिपः कित् ।**
क्षिपणिः वायुः ।

७६ **शकेः उनिः ।**
शकुनिः पक्षी ।

७७ **अगेः निः ।**
अग्निः पावकः ।

७८ **वेणिः ।**
वेणिः केशबन्धः ।

७९ **श्रु-श्रि-यु-वहः नित् ।**
श्रोणिः कटिप्रदेशः ।
श्रेणिः पङ्क्तिः ।
योनिः मार्गः ।
वह्निः अग्निः ।

८० **पार्ष्णिआदयः ।**
पार्ष्णिः पादप्रहारः ।
वृष्णिः शक्रः ।
घृणिः रश्मिः ।
शृणिः अङ्कुशः ।
भूमिः पृथिवी ।
भूर्णिः वारणः ।
चूर्णिः ग्रन्थविशेषः ।
तूर्णिः त्वरितः ।
जूर्णिः मुसलः ।

८१ **वृ-दृभ्यां विन् ।**
वर्विः शकटम् ।

दर्विः तर्दूः ।

८२ **जागुः क्विन् ।**

जागृवी राजा ।

८३ **छविआदयः ।**

छविः त्वक् ।

स्थविः तन्तुवायः ।

किकिः पक्षी ।

दिविः आदित्यः ।

दीदिविः स्वर्गः ।

कृविः धूपः ।

पृष्विः रजः ।

जीविः औषधिः ।

८४ **दृ-वसिभ्यां क्तिन् ।**

दृतिः चर्म ।

वस्तिः मुद्राश्रयः ।

८५ **पातेः डतिः ।**

पतिः स्वामी ।

पशुपतिः महादेवः ।

८६ **अमेः अतिः ।**

अमतिः कालः ।

८७ **वहि-वसिभ्याम् चतिः ।**

वहतिः गौः ।

वसतिः ग्रामसन्निवेशः ।

८८ **तन्द्रेः ईः ।**

तन्द्रीः मूर्छा ।

८९ **लक्षेः मुट् च ।**

लक्ष्मीः श्रीः ।

९० **अवीआदयः ।**

अवीः प्रकाशः ।

तरीः वैश्वानरः ।

स्तरीः धूमः ।

ययीः अश्वः ।

पपीः आदित्यः ।

वातप्रमीः वातमृगः ।

९१ **रातेः डैः ।**

राः सुवर्णम् ।

९२ **गमेः डोः ।**

गौः पृथिवी ।

९३ **ग्ला-नुदिभ्यां डौः ।**

ग्लौः चन्द्रमाः ।

नौः जलतरणी ।

९४ **तारेः अन् ।**

तारा भगवती ।

९५ **जेः नुक् च ।**

जिनः भगवान् बुद्धः ।

**॥ उणादौ प्रथमः पादः समाप्तः ॥**

१ **इण्-भी-का-पा-शलि-मर्चिभ्यः कन् ।**

एकः एकाकी ।

भेकः मण्डूकः ।

काकः वायसः ।

पाकः बालः ।

शल्कः वल्कलः ।

मर्कः वायुः ।

२ **यूकाआदयः ।**

यूका ओकणी ।

अर्भकः शिशुः ।

पृथुकः बालः ।

भीकः भीरुः ।

उदकम् जलम् ।

घूकः कालः ।

स्यमीकः वल्मीकः ।

वीका अन्तर्गलवर्तिका ।

ह्लीकः अधृष्टः ।

ह्लीकः स एव ।

एवम् अन्येऽपि द्रष्टव्याः ।

३ **कृ-दा-धा-रा-अर्चिभ्यः कः ।**
कर्कः वर्णविशेषः ।
कल्कम् पिष्टद्रव्यम् ।
दाकः यज्ञः ।
धाकः ओदनः ।
राका पौर्णमासी ।
अर्कः आदित्यः ।

४ **उल्कादयः ।**
उल्का ज्वाला ।
उल्मुकम् अर्धदग्धकाष्ठम् ।
सृकः उत्पलम् ।
वृकः पशुजातिः ।
भूकम् छिद्रम् ।
मुष्कः वृषणम् ।
वल्कम् वल्कलम् ।
शुकः पक्षी ।

५ **क्षिपि-लङ्घि-लिखि-धमिभ्यः क्वुन् ।**
क्षिपकः योद्धा ।
लङ्घकः मालाकारः ।
लिखकः चित्रकरः ।
धमकः कर्मकरः ।

६ **हो द्वे च ।**
जहकः कालः ।

७ **कृषेः अचश्चाद् वा ।**
कार्षकः कुटुम्बी ।
कृष्को वा ।

८ **व्रश्चि-मूषेश्च किकन् ।**
वृश्चिकः कीटः ।
मूषिकः आखुः ।
कृषिकः कुटुम्बी ।

९ **पणि-पतेः आङः ।**
आपणिकः वणिक् ।
आपतिकः बालः ।

१० **स्यमः यः ईत् च ।**
सीमिकः वृक्षः ।

११ **भी-शीभ्याम् आनकः ।**
भयानकम् गहनम् ।
शयानकः अजगरः ।

१२ **शिङ्घेः आणकः ।**
शिङ्घाणकः नासास्रवः ।

१३ **कृति-भिदि-लतेः क्तिकन् ।**
कृत्तिका नक्षत्रम् ।
भित्तिका कुड्यम् ।
लत्तिका गोधा ।

१४ **इषेः क्तकन् ।**
इष्टका पक्वमृत्तिका ।

१५ **वलि-पतेः आकः ।**
वलाका पक्षिजातिः ।
पताका ध्वजः ।

१६ **पिनाकआदयः ।**
पिनाकः त्रिशूलः ।
खजाकः पक्षी ।
मनाकः स्तोकः ।
गुवाकः पूगफलम् ।
तडाकः सरः ।
शलाका विद्योपकरणद्रव्यम् ।
नशाकः ताडयिता ।
श्यामाकः तृणजातिः ।
विदाकः ज्ञानम् ।
नमाकः पिच्छिलः ।
भण्डाकम् शुभम् ।
खुराकः मर्मच्छेदनद्रव्यम् ।

१७ **क्रियः इकन् ।**
क्रयिकः क्रेता ।

१८ **अलि-इषः कीकन्** ।

अलीकम् मृषा ।
इषीका तूलाश्रयः ।

१९ **किङ्किणीकाआदय** ।

किङ्किणीका क्षुद्रघण्टिका ।
तिन्तिडीका वृक्षजातिः ।
मृद्वीका द्राक्षा ।
मृडीकः उरगः ।
पतत्रीका पक्षी ।
वर्वरीका तरुणी ।
जर्जरीका छिद्रम् ।
वलीका उदरवर्तिः ।
ऋजीकः ऋजुकः ।
वाह्लीकः जनपदः ।
शर्शरीकः इन्द्रः ।
पर्परीका अश्वशाला ।
दर्दरीकः मर्दलकः ।
शृणीका लाला ।
मणीका मेखला ।
कणीका सूक्ष्मजातिः ।

२० **कृञादिभ्यः वुन्** ।

करका सुराभाण्डम्
सरकः सुरापानम् ।
नरकः दुःखस्थानम्
भरकः स्वामी ।
वरकः चरणम् ।
कनकम् सुवर्णम् ।
जनकः पिता ।

२१ **शलि-मण्डेः ऊकञ्** ।

शालूकम् उत्पलादिमूलम् ।
मण्डूकः भेकः ।

२२ **उलूक आदयः** ।

उलूकः पेचकः ।
मधूकः वृक्षजातिः ।
वलूकः हिंस्रः ।
जलूका प्राणकविशेषः ।
मरूकः मयूरः ।
काणूकः काकः ।
मलूकः कृमिजातिः ।
भालूकः अच्छभल्लः ।
पिचूकः कर्पासः ।
कचूकः शाकजातिः ।

२३ **शमेः खः** ।

शङ्खः उदकसंभवः ।

२४ **मुहेः मूर् च** ।

मूर्खः वालः ।

२५ **शिखा** ।

शिखा दीप्तिः ।

२६ **मुदि-ग्रोः गक्-गौ** ।

मुद्गः व्रीहिजातिः ।
गर्गः शास्त्रविशेषः ।

२७ **पतेः अङ्गच्** ।

पतङ्गः शलभः ।

२८ **गमेः गन्** ।

गङ्गा जाह्नवी ।

२९ **शृङ्ग-अङ्ग-भृङ्गाः** ।

शृङ्गम् विषाणम् ।
अङ्गम् शरीरम् ।
भृङ्गः भ्रमरः ।

३० **जनेः घः** ।

जङ्घा प्राण्यङ्गम् ।

३१ **कचेः छः** ।

कच्छः पार्श्वः ।

३२ **शकादिभ्यः अटन् ।**
शकटम् वाहनम् ।
अकटम् हिरणम् ।
कुलटा बन्धकी ।
देवटः ऋषिः ।
मर्कटः वानरः ।
कमटः रुद्रः ।

३३ **जटा-लोष्टम् ।**
जटा केशबन्धः ।
लोष्टम् मृद्वलिः ।

३४ **कॄ-तॄ-कृपेः कीटन् ।**
किरीटम् मुकुटम् ।
तिरीटम् वेष्टनम् ।
कृपीटम् जलम् ।

३५ **शमेः ण्ठः ।**
शण्ठः महिषचौरः ।

३६ **कमः अठत् च ।**
कमठः वामनः ।
कण्ठः ग्रीवा ।

३७ **कॄ-वृञः अण्डन् ।**
करण्डः गुह्यस्थानम् ।
वरण्डः मुखरोगः ।

३८ **ऊर्णोः डः ।**
ऊर्णा मेषरोम ।

३९ **ञमन्तात् डः ।**
चण्डः दुर्जनः ।
दण्डः लगुडः ।
अण्डः पक्षिप्रसवः ।
रण्डा अप्रसवा ।
वण्डः दुश्चर्मा ।
गण्डः कपोलः ।
खण्डः गुडविकारः ।

४० **कुण्ड आदयः ।**
कुण्डम् भाजनम् ।
मुण्डम् शिरः ।
जुण्डम् वनम् ।
तुण्डम् मुखम् ।
एवम् अन्येऽपि द्रष्टव्याः ।

४१ **शमेः ढः ।**
शण्ढः अप्रसवः ।

४२ **शकेः उन्तः ।**
शकुन्तः पक्षी ।

४३ **जॄ-विशः अन्तच् ।**
जरन्तः महिषः ।
वेशन्तः वल्लभः ।

४४ **रुहि-नन्दि-जीवेः षित् ।**
रोहन्तः वृक्षः ।
रोहन्ती ओषधी ।
नन्दन्ती सखी ।
जीवन्ती ओषधी ।

४५ **भू-जि-वसि-वहि-साधि-भासि-गडि-मण्डि-हेमिभ्यः ।**
भवन्तः कालः ।
जयन्तः वृक्षविशेषः ।
वसन्तः ऋतुविशेषः ।
वहन्तः रथः ।
साधन्तः भिक्षुः ।
भासन्तः सूर्यः ।
गडयन्तः मेघः ।
मण्डयन्तः ओदनः ।
हेमन्तः ऋतुः ।

४६ **अतः भुवः डुतच् ।**
अद्भुतम् आश्चर्यम् ।

४७ **रुहि-हृ-श्याभ्यः इतच् ।**
रोहितः मत्स्यः ।
लोहितम् रक्तम् ।
हरितः वर्णविशेषः ।
श्येतः स एव ।

४८ **भृत्रादिभ्यः अतच् ।**
भरतः नटः ।
जयतः वह्निः ।
पर्वतः गिरिः ।
पचतः सूपकारः ।
यमतः व्याधिः ।
दर्शतः सोमः ।
नमतः नम्रः ।
हर्यतः यज्ञः ।
खलतः दुर्जनः ।

४९ **पृषि-रञ्जेः कित् ।**
पृषतः मृगः ।
रजतम् रूप्यम् ।

५० **मृ-गॄ-वा-हसि-इण्-अमि-दमि-लू-पू-धूर्विभ्यः तन् ।**
मर्तः लोकः ।
गर्तः श्वभ्रम् ।
वातः वायुः ।
हस्तः करः ।
एतः वर्णः ।
अन्तः अवसानम् ।
दन्तः दशनम् ।
लोतः अश्रुपातः ।
पोतः बालः ।
धूर्तः शठः ।

५१ **घृ-सि-दूभ्यः क्तः ।**
घृतम् आज्यम् ।
सितम् शुक्लम् ।
दूतः प्रेष्यः ।

५२ **तात-पलित-जर्त-सूरताः ।**
तातः पिता ।
पलितः केशविकारः ।
जर्तः दीर्घरोमा ।
सूरतः सुखसंवासः ।

५३ **शमादिभ्यः अथः ।**
शमथः समाधिः ।
शपथः प्रत्ययकारः ।
आवसथः गृहम् ।
वदथः कोकिलः ।
रवथः स एव ।
गमथः कालः ।
जीवथः धर्मः ।
प्राणथः प्रजापतिः ।
भरथः अग्निः ।
वेदथः मार्गः ।

५४ **रमि-कुषि-काशिभ्यः क्थन् ।**
रथः स्यन्दनम् ।
कुष्ठः व्याधिः ।
काष्ठम् इन्धनम् ।

५५ **अवात् भृञः ।**
अवभृथः यज्ञावसानम् ।

५६ **उषि-कुषि-गा-अर्तिभ्यः थन् ।**
ओष्ठः अधरः ।
कोष्ठः उदरः ।
गाथा ग्रन्थविशेषः । (छन्दोविशेषः)
अर्थः धनम् ।

५७ **[६]-वृञः ऊथन् ।**
जरूथम् अग्रमांसम् ।
वरूथः बलसमूहः ।

५८ **पा-तॄ-तुदि-वचि-रिचि-सिचि-विशेः थक् ।**

पीथम् जलम् ।
तीर्थम् पुण्यस्थानम् ।
तुत्थः अग्निः ।
उक्थः सामवेदः ।
रिक्थम् द्रव्यम् ।
सिक्थम् मधूच्छिष्टम् ।
विष्ठा पुरीषम् ।

५९ **यूथ-आदयः ।**

यूथः प्राणिसमूहः ।
गूथः विष्ठा ।
पृष्ठम् प्राण्यङ्गम् ।
समिथः ऋत्विग्विशेषः ।
निशीथः प्रदोषान्तः ।
निर्ऋथः यज्ञावसानम् ।
निभृथः भर्ता ।
गोपीथः प्रत्यूषः ।
उद्गीथः साम ।
प्रोथम् घ्राणाश्रयः ।
तिथः अग्निः ।

६० **शवि-कमिभ्यां दन् ।**

शब्दः ध्वनिः ।
कन्दः मूलम् ।

६१ **अब्द-आदयः ।**

अब्दः संवत्सरः ।
वृन्दम् समूहः ।
कुन्दः पुष्पविशेषः ।
मन्दः जडः ।
तुन्दः उदरवृद्धिः ।
स्यान्दः सुवर्णम् ।

६२ **श्या-स्त्या-हृञ्-अविभ्यः इनच् ।**

श्येनः पक्षी ।
स्त्येनः चौरः ।
हरिणः मृगः ।
अविनः दृश्यः ।

६३ **वृजिन-अजिनम् ।**

वृजिनः कुटिलः ।
अजिनम् चर्म ।

६४ **वी-पतिभ्यां तनन् ।**

वेतना भृतिः ।
पत्तनं नगरम् ।

६५ **द्रु-दक्षिभ्यां इनन् ।**

द्रविणम् द्रव्यम् ।
दक्षिणा लोकयात्रा ।

६६ **विपिन-इरिण-तुहिन-महिनानि ।**

विपिनम् गहनम् ।
इरिणम् ऊषरम् ।
तुहिनम् तुषारः ।
महिनम् महत्त्वम् ।

६७ **रसि-रुचि-रु-वृञ्भ्यः युच् ।**

रसना मेखला ।
रोचना गोपित्तम् ।
रवणः आदित्यः ।
वरणा नदी ।

६८ **उन्देः नलोपश्च ।**

ओदनः अन्नम् ।

६९ **रञ्जेः क्युन् ।**

रजनम् रङ्गः ।
रजनी रात्रिः ।

७० **कॄ-पॄ-वृजि-मण्डि-निधाञ्भ्यः क्युः ।**

किरणः प्रभा ।
पूरणः समुद्रः ।

वृजनम् अन्तरीक्षम् ।
मण्डनम् भूषणम् ।
निधानम् निधिः ।

७१ **धृषेः धिष च ।**
धिषणा बुद्धिः ।

७२ **हन्तः जघ च ।**
जघनम् कटिप्रदेशः ।

७३ **ब्रधि-वसि-धा-पृभ्यः नः ।**
ब्रध्नः आदित्यः ।
वस्नः मूल्यम् ।
धाना यवविकारः ।
पर्णम् पत्त्रम् ।

७४ **कृ-वृ-तृ-स्वपि-सि-द्रुभ्यः नन् ।**
कर्णः श्रोत्रम् ।
वर्णः नीलादिः ।
तर्णः समुद्रः ।
स्वप्नः निद्रा ।
सेना बलसमूहः ।
द्रोणः परिमाणम् ।

७५ **उषि-इण्-अवि-कृषि-तृषि-वुधि-रति-धा-पृभ्यः नक् ।**
उष्णः अग्निः ।
इनः स्वामी ।
ऊनः विकलः ।
कृष्णः वर्णः ।
तृष्णः अभिलाषः ।
बुध्नः पृष्ठान्तः ।
रत्नम् जातौ जातौ यद् उत्कृष्टम् ।
धीनः समुद्रः ।
पूर्णः स एव ।

७६ **कृतेः सुक् च ।**
कृत्स्नम् निरवशेषम् ।

७७ **श्लिषेः इतः अत् च ।**
श्लक्ष्णः मृदुः ।

७८ **तिजेः ईत् च ।**
तीक्ष्णम् निशितम् ।

७९ **रास्ना-आदयः ।**
रास्ना ओषधिः ।
सास्ना गोग्रीवा ।
स्थूणा गृहधरणी ।
वीणा वाद्यविशेषः ।
तृणम् वीरणादि ।
अर्णः विटपः ।
जीर्णः वृद्धः ।

८० **कृ-वृ-तृ-यमि-दारि-अर्जेः उनन् ।**
करुणा कृपा ।
वरुणः जलराजः ।
तरुणः युवा ।
तलुनः स एव ।
यमुना नदी ।
दारुणः रौद्रः ।
अर्जुनः वृक्षविशेषः ।

८१ **शकेः उनः ।**
शकुनः पक्षी ।

८२ **पृ-पा-तलेः पः ।**
पर्पः गृहम् ।
पापम् जिह्मम् ।
तल्पम् शयनम् ।

८३ **स्तोः ऊ च ।**
स्तूपम् चैत्यम् ।

८४ **यु-कु-सूनां कित् च ।**
यूपः यज्ञयष्टिः ।
कूपः प्रहिः ।
सूपः व्यञ्जनम् ।

८५ **बाष्प-आदयः ।**

बाष्पः ऊष्मागमः

शष्पम् बालतृणम् ।

शिल्पम् विज्ञानम् ।

रूपम् नीलादि ।

शूर्पम् कुलवः ।

खष्पः बलात्कारः ।

८६ **सर्तेः अपः सुक् च ।**

सर्षपः व्रीहिजातिः ।

८७ **विटप-आदयः ।**

विटपम् गहनम् ।

विशपः गृहम् ।

उलपः संतापः ।

कुणपः मृतकः ।

उषपः अग्निः ।

कुतपः प्रस्थचतुर्थभागः ।

दलपः प्रहरणम् ।

कचपः शाकविशेषः ।

विष्टपः स्वर्गः ।

मण्डपः देवगृहम् ।

विशिपः प्रवेशः ।

८८ **रातेः इफः ।**

रेफः अक्षरम् ।

८९ **गुरेः फक् ।**

गुल्फः प्रपदम् ।

९० **गृ-शृभ्यां वः ।**

गर्वः मानः ।

शर्वः महादेवः ।

९१ **अशि-लटि-कणि-खटि-विशेः क्वन् ।**

अश्वः तुरङ्गः ।

लट्वा पक्षी ।

कण्वम् पापम् ।

खट्वा शयनीयम् ।

विश्वम् निरवशेषम् ।

९२ **शिव-आदयः ।**

शिवम् शान्तम् ।

सर्वम् अशेषम् ।

उल्बम् जरायुः ।

शुल्बम् ताम्रम् ।

निम्बम् अरिष्टम् ।

बिम्बम् शरीरम् ।

शम्बः लोहविकारः ।

स्तम्बः विटपम् ।

जिह्वा रसना ।

ग्रीवा गलप्रदेशः ।

९३ **कृ-शृ-गर्दः अभच् ।**

करभः उष्ट्रः ।

कलभः हस्तिपोतः ।

शरभः पशुजातिः ।

शलभः पतङ्गः ।

गर्दभः खरः ।

९४ **ऋषि-वृषि-रासि-वल्लेः कित् ।**

ऋषभः बलीबर्दः ।

वृषभः स एव ।

रासभः गर्दभः ।

वल्लभः प्रियः ।

९५ **दृङः भः ।**

दर्भः कुशः ।

९६ **गिरः भन् ।**

गर्भः अन्तःप्रदेशः ।

९७ **इणः कित् ।**

इभः कुञ्जरः ।

९८ **गुधेः ऊमः ।**

गोधूमः व्रीहिजातिः ।

११६ **हः हिर् च ।**
हिरण्यम् सुवर्णम् ।
११७ **पर्जन्यः ।**
पर्जन्यः शक्रः ।
११८ **पुणेः क्यन् ।**
पुण्यम् कुशलस्थानम् ।
११९ **शिक्यम् धिष्ण्यम् ।**
शिक्यम् उद्ग्राह्यम् ।
धिष्ण्यम् गृहम् ।

**॥ उणादौ द्वितीयः पादः समाप्तः ॥**

१ **मदि-अङ्गि-वाशि-मथि-चतिभ्यः उरच् ।**
मन्दुरा वाजिशाला ।
अङ्गुरः बीजप्रसवः ।
वाशुरा रात्रिः ।
मथुरा नगरी ।
चतुरः दक्षः ।
२ **मकुर-दर्दुर-विधुराः ।**
मकुरः दर्पणः ।
दर्दुरः भेकः ।
विधुरः विगुणः ।
३ **असेः उरन् ।**
असुरः आदित्यः ।
४ **श्वशुरः ।**
श्वशुरः भार्यापिता ।
५ **तिमि-रुधि-मदि-मन्दि-चन्दि-बन्धिभ्यः किरच् ।**
तिमिरम् अन्धकारः ।
रुधिरम् क्षतजम् ।
मदिरा सुरा ।
मन्दिरम् गृहम् ।
चन्दिरः हस्ती ।
वधिरः श्रोत्रविकलः ।
६ **स्थिर-आदयः ।**
स्थिरम् अचलम् ।
अजिरम् गृहम् ।
शिशिरम् ऋतुविशेषः ।
खदिरः वृक्षजातिः ।
स्थविरः वृद्धः ।
इषिरः शरः ।
छिदिरः छिद्रम् ।
भिदिरः वज्रः ।
मुहिरः मूर्खः ।
मुचिरः दाता ।
रुचिरः शोभनः ।
श्रथिरम् शिथिलम् ।
स्फिरम् स्फीतम् ।
७ **तञ्च-वञ्च-शकि-क्षिपि-क्षुदि-रुदि-मदि-मन्दि-चन्दिभ्यः रक् ।**
तक्रम् मथितम् ।
वक्रम् कुटिलम् ।
शक्रः देवराजः ।
क्षिप्रम् त्वरितम् ।
क्षुद्रः अदानी ।
रुद्रः महादेवः ।
मद्रः देशः ।
मन्द्रः धीरः ।
चन्द्रः चन्द्रमाः ।
८ **श्विति-वृति-नी-वी-छिदि-मुदि-दहि-तृपि-शुभिभ्यश्च ।**
श्वित्रम् कुष्ठम् ।
वृत्रः दैत्यः ।
नीरम् जलम् ।
वीरः विक्रान्तः ।
छिद्रम् विवरः ।

मुद्रा प्रत्ययकरणी ।
दह्रम् तरुणम् ।
तृप्रः पुरोडाशः ।
शुभ्रम् शुक्लम् ।

९ **तमि-अमि-जीनां दीर्घश्च ।**
ताम्रम् शुल्वम् ।
आम्रः वृक्षजातिः ।
जीरः वह्निः ।

१० **दूर-आदयः**
दूरम् विप्रकृष्टम्
उद्रः जलचरः ।
कृच्छ्रम् कष्टम् ।
चुक्रम् आम्लम् ।
दभ्रः कुशः ।
उस्रः केदारः ।
उस्रा गोग्रीवा ।
वाश्रम् पुरीषम् ।
शीरः अजगरः ।
हस्रः हासः ।
सिध्रः साधुजनः ।
रन्ध्रम् विवरः ।
विकुस्रः चन्द्रमाः ।
वन्द्रः पूजकः ।
खिद्रः दैन्यः ।

११ **सु-सू-धाव्-गृधेः क्रन् ।**
सुरा मद्यम् ।
सूरः रविः ।
धीरः मत्स्यघाती ।
गृध्रः पक्षिजातिः ।

१२ **सि-मि-चीनाम् ईत् च ।**
सीरः लाङ्गलम् ।
मीरः जलम् ।
चीरम् वल्कलम् ।

१३ **वपि-वजि-वृधि-इन्दिभ्यः रन् ।**
वप्रः केदारः ।
वज्रः कुलिशः ।
वर्ध्रः चन्द्रः ।
इन्द्रः शक्रः ।

१४ **भद्र-आदयः ।**
भद्रम् कल्याणम् ।
उग्रः उत्कृष्टः ।
भेरः दुन्दुभिः ।
भेरी स एव ।
अग्रम् श्रेष्ठम् ।
गौरः अवदातः ।
गौरी शिवा ।
शुक्रम् रेतः ।
वृध्रः वयोधिकः ।
ऋज्रः नायकः ।
विप्रः ब्राह्मणः ।
कुप्रः शङ्करः ।
चुम्रः प्रीतिकरः ।
क्षुरः रोमायुधम् ।
खुरः मर्मच्छेदनः ।
इरा मही ।

१५ **चति-कटि-शॄ-वृञः ट्वरच् ।**
चत्वरम् अङ्गनम् ।
कट्वरम् दधिविकारः ।
शर्वरः महादेवः ।
शर्वरी निशा ।
वर्वरी कुटिलकेशा ।
वर्वरम् केशविकारः ।

१६ **पीवर-आदयः ।**
पीवरः स्थूलः

चीवरम् भिक्षुप्रावरणम् ।
तीवरः म्लेच्छः ।
नीवरम् गृहम् ।
गह्वरम् गहनम् ।
चित्वरः धूर्तः ।
चत्वरः उपस्थः ।
धीवरः मत्स्यघाती ।
मीवरः पूज्यः
संयद्वरः बाष्पः ।

१७ **कुवः क्वन् ।**
कुरवः पक्षी ।

१८ **मदि-अशि-वसेः सरन् ।**
मत्सरः कृपणः ।
अक्षरम् वर्णः ।
वत्सरः वर्षः ।
संवत्सरः स एव ।

१९ **कृ-धू-तनेः कित् ।**
कृसरा तिलयवागूः ।
धूसरः रूक्षः ।
तसरः कुन्दद्रव्यम् ।

२० **भ्रमि-वठि-देवि-वासेः अरन् ।**
भ्रमरः षट्पदः ।
वठरः मूर्खः ।
देवरः पतिभ्राता ।
वासरः दिवसः ।

२१ **अङ्गि-मदि-मन्दि-कडेः आरन् ।**
अङ्गारः दग्धकाष्ठम् ।
मदारः मणिविशेषः ।
मन्दारः वृक्षजातिः ।
कडारः पिङ्गलः ।

२२ **शृङ्गि-भृङ्गि-मृजि-कञ्जेः चित् ।**
शृङ्गारम् दर्शनीयम् ।
भृङ्गारः सुवर्णभाजनम् ।
मार्जारः बिडालः ।
कञ्जारः मयूरः ।

२३ **कमः अतः उत् च ।**
कुमारः बालजनः ।

२४ **शिरः करन् ।**
शर्करा गुडविकारः ।

२५ **पुषः कित् ।**
पुष्करम् पद्मम्

२६ **क्षणः डीरच् ।**
क्षीरम् पयः ।

२७ **कृ-शॄ-शौटिभ्यः ईरच् ।**
करीरः वंशाङ्कुरः ।
शरीरम् देहः ।
शौटीरः दाता

२८ **वशेः कित् ।**
उशीरम् वीरणमूलम् ।

२९ **गम्भीर-आदयः ।**
गम्भीरम् भयानकम् ।
गभीरः दुरवगाहः ।
कुम्भीरः जलचरः ।
कुटीरः जनवासः
परीरः समुद्रः ।
पटीरः कन्दर्पः ।
कुरीरम् मैथुनम् ।

३० **मसेः ऊरन् ।**
मसूरः व्रीहिजातिः ।

३१ **जनेः अरः ठश्च ।**
जठरः मूर्खः ।

३२ **वदेर्वा ।**
वठरः जडः ।
बदरम् कर्कन्धूफलम् ।

बदरी तद् एव ।

३३ **पचेः अतः इत् च ।**

पिठरः स्थालीपाकः ।

३४ **कठि-चकिभ्याम् ओरः ।**

कठोरः निबिडः ।

चकोरः पक्षी ।

३५ **घृणेः डोरः ।**

घोरम् अन्तकरम् ।

३६ **धा-दा-नी-पति-पा-शसिभ्यः ष्ट्रन् ।**

धात्री धरणी ।

दात्रम् लवनद्रव्यम् ।

नेत्रम् चक्षुः ।

पत्त्रम् पर्णम् ।

पात्रम् भाजनम् ।

शस्त्रम् प्रहरणम् ।

३७ **उषि-सू-मूभ्यः कित् ।**

उष्ट्रः करभः ।

सूत्रम् कल्याणम् (?) ।

मूत्रम् प्रस्रावः ।

३८ **अमि-नक्षि-कडिभ्यः अत्रच् ।**

अमत्रम् भाजनम् ।

नक्षत्रम् तारकादि ।

कडत्रम् भार्या ।

कलत्रम् सा एव ।

३९ **वृञश्च ।**

वरत्रा चर्ममयी ।

४० **अमि-चि-मिदेः त्रक् ।**

अन्त्रम् कुक्षनाडी ।

चित्रम् अद्भुतम् ।

मित्रम् सुहृत् ।

४१ **पूङः ह्रस्वश्च ।**

पुत्रः तनयः ।

४२ **वह-लादिभ्यः इत्र-उत्रौ ।**

वहित्रम् वहनम्

पवित्रम् यज्ञसूत्रम् ।

कडित्रम् चर्ममयम् ।

लोत्रम् अपहृतद्रव्यम् ।

पोत्रम् सूकरनासाग्रम् ।

श्रोत्रम् श्रुतिः ।

४३ **खर्जि-पिञ्जादिभ्यः ऊर-ऊलचौ ।**

खर्जूरः वृक्षजातिः ।

कर्पूरः मुखसुगन्धिद्रव्यम् ।

वल्लूरम् शुष्कमांसमयम् ।

पिञ्जूलः पक्षिजातिः ।

लाङ्गूलम् पुच्छम् ।

४४ **तमेः वुक् च ।**

ताम्बूलम् मुखभूषणम् ।

४५ **शवि-कमः कलन् ।**

शवलम् व्यामिश्रम् ।

कमलम् पद्मम् ।

४६ **वृषादिभ्यः चित् ।**

वृषलः शूद्रः ।

उत्पलम् इन्दीवरम् ।

वटलः अक्षिरोगः ।

कला कालविशेषः ।

गलः कण्ठप्रदेशः ।

चपलः दुर्विनीतः ।

केवलम् असहायम् ।

४७ **शकि-शमेः नित् ।**

शकलम् अस्थि ।

शमलम् अशुचि ।

४८ **कुटेः क्मलच् ।**

कुट्मलम् अविकसितम् ।

४९ **पति-चण्डिभ्याम् आलच् ।**

पातालम् रसातलम् ।

चण्डाल: मातङ्गः ।

५० **कुणि-पीभ्याम् कालन् ।**

कुणाल: पक्षी ।

पियाल: वृक्षजातिः ।

५१ **पालन्-वलञौ शीङः ।**

शेपालम् जलतृणम् ।

शैवल: स एव ।

५२ **मङ्गेः अलच् ।**

मङ्गल: प्रशस्तः ।

५३ **माला-इल्वल-पल्वल-चषाल-शिथिल-शुक्ल-तण्डुलाः ।**

माला स्रग्दाम ।

इल्वला: तारकाः ।

पल्वलम् शाखापत्रम् ।

चषाल: यज्ञोपकरणद्रव्यम् ।

शिथिलम् अदृढम्

शुक्लम् श्वेतम् ।

तण्डुल: धान्यसंभवः ।

५४ **अर्तेः पिशन् ।**

अर्पिश: अग्रमांसम् ।

५५ **वृ-भृ-वमि-कुभ्यः शक् ।**

वृश: गौः

भृश: गत्यर्थः ।

वंश: वेणुः ।

कुश: दर्भः ।

५६ **कीनाश-दाश-अङ्कुशाः ।**

कीनाश: कृपणः ।

दाश: कैवर्तः ।

अङ्कुश: गजप्रबोधकः ।

५७ **ऋ-मञ्जि-पीयि-हनि-अगिभ्यः ऊषन् ।**

अरूष: चन्द्रमाः ।

मञ्जूषा काष्ठमयम् ।

पीयूष: अमृतकम् ।

हनूष: व्याघ्रः ।

अङ्गूष: देवगमः (?) ।

५८ **पुरः कुषन् ।**

पुरुष: नरः ।

५९ **कृ-तृभ्याम् ईषन् ।**

करीष: गोमयम् ।

तरीष: समुद्रः ।

६० **शिरीष-आदयः ।**

शिरीष: वृक्षजातिः ।

पुरीषम् विष्ठा ।

अम्बरीष: भ्राष्ट्रम् ।

ऋजीष: नायकः ।

६१ **अवेः टिषच् ।**

अविष: समुद्रः ।

अविषी नदी ।

६२ **किल्बिष-आदयः ।**

किल्बिषम् पापम् ।

रोहिष: मृगः ।

लोहिष: स एव ।

ताविष: सूर्यः ।

ताविषी नदी ।

व्यथिष: व्याधिः ।

अव्यथिष: स्वर्गः ।

६३ **वृ-त-वदि-हनि-मानि-कमि-अशि-कशेः सः ।**

वर्ष: संवत्सरः ।

तर्ष: समुद्रः ।

वत्स: बालः ।

हंसः पक्षी ।

मांसम् पिशितम् ।

कंसः असुरराजः ।

अक्षम् इन्द्रियम् ।

कक्षः वनप्रदेशः ।

६४ **ऋषि-वृषि-स्नुभ्यः सक् ।**

ऋक्षम् नक्षत्रम् ।

वृक्षः तरुः ।

स्नुषा पुत्रवधूः ।

६५ **पनि-मनि-रभि-चमि-अति-वेति-युवः असच् ।**

पनसः कण्टकफलम्[1] ।

मनसम् हृदयम् ।

रभसः उत्साहः ।

चमसः पिष्टकः ।

अतसः पुष्पजातिः ।

वेतसः वृक्षः ।

यवसः घासः ।

६६ **कृञः पासप् ।**

कर्पासः कर्तनद्रव्यम् ।

६७ **सिचेः कन् उम्-हौ च ।**

सिंहः केसरी ।

६८ **श्रि-स्रु-द्रु-प्रु-ज्वां क्विप् दीर्घश्च ।**

श्रीः लक्ष्मीः ।

स्रूः स्रुक् ।

द्रूः सुवर्णम् ।

प्रूः कामचारः ।

जूः पिशाचः ।

६९ **प्रछि-वचोः तौ च ।**

प्राट् शिष्यः ।

वाग् वाणी ।

७० **गमः द्वे च ।**

जगत् त्रैलोक्यम् ।

७१ **परिव्रजेः षश्च पदान्ते ।**

परिव्राट् परिव्राजौ परिव्राजः ।

७२ **स्रुवः चिक् ।**

स्रुग् यज्ञभाण्डम् ।

७३ **वशि-वणिभ्याम् इजिक् ।**

उषिक् तन्त्रवायः ।

वणिग् वाणिजः ।

७४ **मृङः उतिः ।**

मरुत् वायुः ।

७५ **ग्रो वा मुट् च ।**

गरुत् पक्षः ।

गर्मुत् सुवर्णम् ।

७६ **हृ-सृ-तडि-रुहि-युषिभ्यः इतिः ।**

हरित् शाद्वलः ।

सरित् नदी ।

तडित् विद्युत् ।

रोहित् मत्स्यः ।

लोहित् रक्तः ।

योषित् अङ्गना ।

७७ **पृषि-वृषि-महेः शतृः ।**

पृषत् मृगः ।

वृषत् विपुलः

महत् महायानम् ।

महान् उत्तमः ।

७८ **शरद्-दरद् दृषदः ।**

शरत् ऋतुः ।

दरत् द्रव्यम् ।

दृषत् शिला ।

---

१ कण्टकयुक्तं फलं कण्टकफलम् (फणस) ।

